# SANKARAVIJAYA

OR THE

LIFE AND POLEMICS OF SANKARACHARYA

BY

ANANDAGIRI

EDITED BY

*PANDIT JIBANANDA VIDYASAGARA, B. A.*

*Superintendent, Free Sanskrit College, Calcutta.*




CALCUTTA:

PRINTED AT THE SARASUDHANIDHI PRESS.

1881.

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent Free Sanskrit College, Calcutta.

# एतानि मुद्रितसंस्कृतपुस्तकानि

१ आशुबोध व्याकरणम् १।०
२ धातुरूपादर्शः २
३ शब्दस्तोम महानिधिः (संस्कृत अभिधान) १०
४ सिद्धान्तकौमुदी सरला टीका सहिता ११
५ सिद्धान्तबिन्दुसार (वेदान्त) ॥
६ तुलादानादिपद्धतिः (बङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धतिः १
८ शब्दार्थरत्न ॥।
९ वाक्यमञ्जरी (बङ्गाक्षरैः) ।
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ॥/
११ वेणीसंहार नाटक सटीक १
१२ मुद्राराक्षस नाटक सटीक १॥
१३ रत्नावली नाटिका सटीक ॥।
१४ मालविकाग्निमित्र सटीक १॥
१५ धनञ्जय विजय सटीक ।
१६ महावीरचरितनाटक १॥
१७ साङ्ख्यतत्त्वकौमुदी सटीक २
१८ वैयाकरणभूषणसार ॥।
१९ लीलावती ॥।
२० बीजगणित १
२१ शिशुपालवध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक २॥
२३ कुमारसम्भव पूर्वखण्ड सटीक ॥।
२४ कुमारसम्भव उत्तरखण्ड ॥
२५ अष्टकम् पाणिनीयम् ॥।
२६ वाचस्पत्यम् (संस्कृत बृहदभिधान) १२०
२७ कादम्बरी सटीक ४
२८ राजप्रशस्ति ।/
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४
३० सर्वदर्शनसंग्रह १
३१ भामिनीविलास सटीक १
३२ हितोपदेश सटीक १
३३ भाषापरिच्छेद मुक्तावलीसहित १
३४ बहुविवाहवाद ।
३५ दशकुमारचरित सटीक १॥
३६ परिभाषेन्दुशेखर ॥।
३७ कविकल्पद्रुम धातुपाठः ॥
३८ चक्रदत्त (वैद्यक) २॥
३९ उणादिसूत्र सटीक २
४० मेदिनीकोष १
४१ पञ्चतन्त्रम् (श्रीविष्णुशर्मणा सङ्कलितम्) २॥
४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ॥
४३ माघचम्पू ।/
४४ तर्कसंग्रह (इंराजी अनुवाद सहित) ॥
४५ प्रसन्नराघव नाटक (श्रीजयदेवकवि विरचित) १
४६ विवेकचूडामणि (श्रीमत् शङ्कराचार्य्य कृत) ।/
४७ काव्यसंग्रह (सम्पूर्ण) ५
४८ लिङ्गानुशासन सटीक ।
४९ ऋतुसंहार सटीक ।/
५० विक्रमोर्वशी (सटीक) ०॥
५१ वसन्ततिलक भाण ।/

# शङ्करविजयः ।

आनन्दगिरि-विरचितः ।

Ānanda-giri

वि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।

कलिकातानगर्य्यां सारसुधानिधियन्त्रे

मुद्रितः ।

१८८१

# शङ्करविजयस्य निर्घण्टपत्रम् ।

——::❀::——

# शंकरविजये

## प्रथमं प्रकरणम् ।

—:::*:::—

श्रीगणेशाय नमः ।

नमामि शङ्कराचार्य्यगुरुपादसरोरुहम् ।
यस्य प्रसादान्मूढ़ोऽपि सर्वज्ञोऽहं सदाऽस्म्यऽलम् ।

अनन्तानन्दगिरिरहमप्रतिहताज्ञस्य भगवतः शिष्यः स्वगुरोरवतारप्रयोजनं वर्णयामि । सन्यत्र मम परमगुरोरवतारकथा-तदुपकृतिपोषितजगत्परम्पराऽविच्छिन्नशुद्धाद्वैतविद्याप्रतिष्ठा-तदाशाविजयकौतूहल- तद्व्यासदर्शनविचित्रतच्छरीरावसानकालागतब्रह्मदेववचन- व्यासदत्तायुःप्रपञ्चभट्टदर्शन-मण्डनमिश्रजय-तदङ्गनाप्रसङ्ग- देहान्तरसञ्चारविदितकामशास्त्र-शिष्यागमन-नृसिंहसाक्षात्कार-सरस्वतीजयशृङ्गगिरिस्थानवास-काञ्चीनगरनिर्म्माण-कामाक्षिप्रपञ्च-श्रीचक्रनिर्म्माण-मोक्षमार्गप्रकाश-सच्चिदानन्दैक्यनामानि प्रकरणानि, तत्तदवान्तरकथाविस्तारविजृम्भितं नानाप्रश्नोत्तरभासुरं बहुदुष्टमतनिबर्हणमिदानीं करोमि ॥

इति अनन्तानन्दगिरिकृतौ आचार्य्यविजये शास्त्रोपकरणं प्रकरणं प्रथमम् ।

# द्वितीयं प्रकरणम् ।

—०—

अथ भगवांश्चतुर्मुखः स्वमुखबाहूरुपादेभ्यः किल ब्राह्मक्षत्रवैश्यशूद्रान् निर्म्माय संस्थानचक्राधिदेवशिवविष्णुब्रह्मगणपत्युपासकान् कृत्वा जातिधर्म्मपरिपालनतपोविधिमाकल्पपर्य्यन्तमाचकार । ततः प्रवृत्तेषु कृतादियुगेषु ब्राह्मणादयः सत्यधर्म्मतपोविद्यादिपरिशोभितशीलाः सर्वदेवमयः स्वजातिदेव इति सम्यग्विचारसम्पन्नाः स्वेशैक्यनिर्जितभिदाद्यन्तरायाः सदाद्यर्थपर्य्यालोचनतत्परा बभूवुः ।

पूज्ये तु सेवका नीचाः पुरुमार्गक्रियानुगाः ।
तत्तद्देव पदं चापुर्यथा जातिकुलस्थिति ॥
विप्राणां दैवतं शम्भुः क्षत्रियाणां तु माधवः ।
वैश्यानां तु भवेद्ब्रह्मा शूद्राणां गणनायकः ॥ इति
मनुस्मृतेः ।

ब्राह्मणेन शिवः शिवतत्त्वविदा सेवितव्यः क्षत्रियादिना तु तत्तत्तत्त्वविदेति निरवद्यं मनुस्मृतेरितरथा कर्त्तुमशक्यत्वात् । परन्तु चीणे-पुण्ये लुप्तधर्म्मतया क्लेशभाजि कलियुगे परस्पररागादिग्रस्तेषु ब्राह्मणादिषु सत्यज्ञानशून्येषु निगमाचारपरित्यक्तेषु लोकप्रवृत्तिः काचिदासीत् ।

केचिच्छम्भुरताः परे हरिरता वाणीरताः केचन
केचिदर्करता दिवाकररता विघ्नेशभक्ताः परे ।

केचिच्छक्तिरताश्च भैरवरताः केचित्तु मल्लारिगा
विष्वक्सेनरताः परे मदनगाः केचिद्गजास्यर्थदम्॥
केचित्सुरेशमपरे यममप्पतिञ्च
वायुं महीमुदकमम्बरमादिमूर्त्तिम्।
केचिद्विराजमपरे त्रिगुणान् यथेष्टं
केचित् प्रधानमपरेऽणुमुपास्तकर्म्म॥
केचित् चन्द्रपराः परे कुजपराः केचित्तु सौम्योत्सुकाः
केचिज्जीवपराः परे भृगुपराः केचित्तु मन्दाश्रिताः।
केचित् कालपराः परे पितृपराः केचित्तु नागेशगाः
केचित् तार्क्ष्यपराश्च सिद्धनिचयं सेवन्ति केचिद्द्विया॥
केचित् गन्धर्वसाध्यादीन् भूतवेतालगाः परे।
एवं नानाप्रभेदानां नृणां वृत्तिर्यथेप्सिता॥
केचित् स्ववृत्तिं वेदार्थैः प्रतिपाद्यां समूचिरे।
केचिद्धर्म्मोरियं मुक्तिरिति जल्पं समाश्रिताः॥
अन्योन्यमत्सरग्रस्ताः परस्परजयैषिणः।
निजेच्छाकृतिमङ्गेषु धारयन्ति रुषान्विताः॥

ततश्च लिङ्गत्रिशूलडमरुम्भडादिचिह्नं, शङ्खचक्रगदापद्मादिचिह्नं,कमण्डलुकूर्च्चिकादिचिह्नं,विस्फुलिङ्गादिचिह्नं, पूर्णमण्डलरक्तचन्दनादिचिह्नं,एकदन्तचिह्नं स्वर्णचर्म्मपादहरिद्रादिचिह्नं, स्फटिकार्द्धचन्द्रजटाविभूत्यादिचिह्नं, वराटमालिकाश्ववृषभाषादिचिह्नं, स्वर्णादिरचितशङ्खचतुर्बाहुत्वादिदण्डतोयपाणित्वादिचिह्नं, पुष्पकोदण्डाद्युपकल्पितवसन्तोत्सवभूषणचिह्नं, नवनिधानरूपकण्ठमालिकादिचिह्नं, मणिरचितवज्रायुधधारणादिचिह्नं, महिषरूपवेष-

प्रतिमादिचिह्नं, सलिलमध्यस्थलपूजादिचिह्नं, वायुपुरुषस्तवोपासनचिह्नं भूमिदेवतोपासनचिह्नं, तीर्थयात्राद्युदकधारणादिचिह्नं, शून्योपासनचिह्नं, आदिवराहोपासनचिह्नं, चतुर्दशलोकपालोपासनचिह्नं, सत्त्वरजस्तमोगुणोपासनवेषधारणादिचिह्नं, साङ्ख्यनिर्दिष्टप्रधानोपासनचिह्नं, तर्कराद्धान्तनिश्चितपीलूपासनचिह्नं, जैमिनिमतसिद्धकर्म्मप्रपञ्चसञ्चारचिह्नं, पूर्णिमादिकालवेषचन्द्रोपासनादिचिह्नं, अङ्गारकादिपञ्चग्रहोपासनचिह्नं, क्षपणकमतसिद्धकालोपासनादिचिह्नं, दर्शादिपुण्यकालासादितपवित्रपित्रुपासनादिचिह्नं, स्वर्णादिरचितशेषफणधारणादिचिह्नं, वैनतेयमूर्त्त्युपासनचिह्नं, नित्यनाथादिसिद्धवेषभाषाधारणादिचिह्नं, गानविशेषे विश्वावसूपासनादिचिह्नं, चिताभस्मोद्धूलनशल्यविशेषधारणादिभिर्भूतराडुपासनादिचिह्नं, अस्थ्यादिबद्धकज्जलादिधारणवेतालोपासनचिह्नमित्यादिबहुविधं यथेच्छं सम्प्राप्य स्वेच्छाविहरणशीला मर्त्या बभूवुः, तानहरहःसन्ध्यामुपासीतेत्यादि बहुविधविधिवचनानि पीड़यन्ति ।

कर्म्मभ्रष्टान् परानन्ददूरान् मूढ़ाननराधमान् ।
तान् दृष्ट्वा नारदः शीघ्रमाप ब्रह्मपदान्तिकम् ॥

भो तात ! नूतनमभूज्जगदेतदर्वाक्
वाक्चित्रयुक्तिपरिकल्पितकर्म्मशीलम् ।
कालादिजातनिगमार्थपरम्परा स्याद्
व्यर्था तदा यदि भवन्मतमप्रमाणम् ॥

भवद्भिः पूर्वमिदमुक्तम् । सदेव सौम्येदमग्र आसीत् ।

ब्रह्म वा इदमग्र आसीत्। आत्मा वा इदमेक एवाग्र आसीत्। वासुदेवो वा इदमग्र आसीत्।

यदाऽतमस्तन्न दिवा न रात्रि-
र्न सन्न चासञ्छिव एव केवलः।
तदक्षरं तत् सवितुर्वरेण्य
प्रज्ञा च तस्मात् प्रसृता पुराणी॥ स्मृतिश्च,
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः इति॥

तत्प्रीतये कर्म्म करोतु विप्रः क्षत्रस्तु भूमिं महसा भुनक्तु।
वैश्योददात्वर्थमथास्य तुष्ट्यै शूद्रः करोत्वग्रजपूजनं हि॥ इति

तस्माद् द्विजातीनामेकमेव दैवतं सदादिशब्दवाच्यं तस्य गुणातीतवृत्तेर्लिङ्गाभावात् तत् सत्त्वे मानाभावाच्च निरुपाधिकं ब्रह्मैव मुमुक्षुभिरुपासनीयमिति। एवं नारद-वचनं निशम्य ब्रह्मापि चिरं ध्यात्वा स्वलोकात् पुत्रमित्र-भक्तादियुक्तः शिवलोकं प्राविशत्। तत्र मध्याह्नकोटिसूर्य्य-कोटितेजसं कोटिहिमांशुशीतलं पञ्चवक्त्रं चन्द्रमौलिं विद्युत्पिङ्गजटाधरम् पार्वतीवामार्द्धशरीरिणं सर्वेश्वरं महा-देवं दृष्ट्वा दण्डवत्सगणः प्रणनाम। उत्थाय सम्पुटितहस्तयुगः सगणो ब्रह्मा किलोवाच। भो महादेव सर्वज्ञ सर्वलोकेश सर्वसाक्षिन् सर्वमय सर्वकारण सर्वात्मक सर्वातीत सर्व-देववन्दितचरणारविन्द प्रणवरूप प्रणवातीत प्रणवगोचर कालरूप कालातीत कमनीयविग्रह कन्दर्पहर कामितार्थ-प्रद करुणाकर श्रीपरमेश्वर! सावधानेन मदीयां विज्ञा-पनामवधारय, तुरीयप्रणवातीताद् ब्रह्मणः सत्यज्ञानानन्त-

लक्षणाद्भगवतः किलार्द्धबिन्दुरूपा प्रकृतिरुत्पन्ना, तदेतस्याश्चन्द्रचन्द्रिकान्यायेन शुद्धाद्वैता सा त्वमेवेति सिद्धम्। तत्सकाशादकारः शुक्लः सत्त्वसम्पन्नः, तस्मादुकारः कृष्णः तामसगुणप्रधान उत्पन्नः, तस्माच्च मकारः शोणवर्णो रजःसम्पन्नोऽहं भवदाज्ञया जरायुजादिचतुर्विधजङ्गमान् पर्वतादीन् स्थावरांश्च सृष्ट्वा समुद्रद्वीपगिरिनदीवनपुरग्रामगोतुरगमर्त्यकरिसिंहव्याघ्रभल्लुकादीन् ब्रह्मक्षत्रियवैश्यशूद्रजातीन् प्राणिनश्च तत्तद्धर्मसमाचारशीलान् कृत्वा भवत्चरणारविन्दध्यानासक्ते मयि सत्यलोकाश्रिते भूलोके कश्चिदुपद्रवः समुत्थितोऽभवत्। तदवधारय।

श्रुत्याचारं परित्यज्य मिथ्याचारं समाश्रिताः।
विप्रादयो विचित्रैस्तु लिङ्गैः सन्तप्तदेहिनः॥
हुतं नैव यथाकालमग्नौ हव्यं समन्वतः।
लिङ्गिनो वयमित्युच्चैरभिमानान्नराधमाः॥
न दत्तं पर्वणि प्राप्ते कव्यं पित्रादितृप्तये।
नाध्यापितं ब्रह्मयज्ञं सत्यलोकस्य सिद्धये॥
नाग्निष्टोमो नाग्रयणं न सन्न्यासं कदाचन।
करोति मनुजः कश्चित् सर्वे पाषण्डमाप्नुयुः॥
विष्णुदासा वयं चेति वयमीशानलिङ्गिनः।
भैरवार्कगणेशानां देव्या भक्ताश्च केचन॥
केचित् कापालिकाचारा मद्यमांसाशिनः सदा।
एकस्यैवमतस्यापि भेदषट्कं समाश्रिताः॥

एवं बहवश्चार्वाकमतसिद्धान्ताश्रिताः तत् स्वरूपमेव परमिति तदाचाराः। सत्यशौचादिधर्मकर्मज्ञानरहिताः

पशव इव द्वैतवादिनः श्रुतिस्मृतीतिहासपुराणोपपुराणादिफलितकर्म्मज्ञानरूपमार्गद्वयं परित्यज्य तृतीयपथामूढ़तात्पर्य्येण हि विहिताविहितमविज्ञाय शुद्धाद्वैतविरोधिनः दुर्नीत्या श्रुत्यर्थविरुद्धं तात्पर्य्यं स्वीकृत्य सर्वे कुमतशीला बभूवुः।

कर्त्ता त्वमीश जगतां मम केशवस्य
तेजोभुगन्तसमये लयकर्तृकत्वात्।
तस्मात् कुविप्रबलकुत्सितदुर्मतानां
नाशाय चिन्तय समुद्धर वेदमार्गम्॥

इति ब्रह्मणा प्रस्तुतः श्रीपरमेश्वरः सन्तुष्टान्तरः सन्निदमुवाच।

ब्रह्मन्! यथासुखं गच्छ सन्तुष्टोऽस्मि तवोक्तितः।
शङ्कराचार्य्यनाम्नाहं सम्भवामि महीतले॥
यद्धितं तव विष्णोश्च तदेव स्थापयाम्यहम्।
मम भक्तावुभौ यस्मात् सत्यं नान्यद्विचिन्तय॥
मद्विभूतिर्हरिस्त्वं हि चेन्द्राद्यष्टदिगीश्वराः।
वसवो द्वादशादित्या गन्धर्वाश्च मरुद्गणाः॥
यक्षाः सिद्धास्तथा साध्या गरुड़ाः किन्नरादयः।
किमत्र बहुनोक्तेन सर्वं चेदं चराचरम्॥
मदङ्गभेदसञ्जातं लये मय्येव लीयते।
अहमेकोऽक्षरः कर्त्ता भुवः शाश्वत एव च॥
आत्मा गुहाशयः सर्ववेदार्थप्रणवात्परः।
तस्मात् सर्वेषु कालेषु मामद्वैतमुपाश्रय॥
इति सम्बोधितो ब्रह्मा प्रणिपत्य महेश्वरम्।

सगणः प्राप सत्याख्यं निजलोकमनन्यधीः ॥
ततः सर्वात्मको देवश्चिदम्बरपुराश्रितः ।
आकालिङ्गनाम्ना तु विख्यातोऽभून्महीतले ॥
तत्र विद्वन्महेन्द्रस्य कुले द्विजगणाश्रिते ।
जातः सर्वज्ञनाम्ना तु कश्चिद्द्विजकुलेश्वरः ॥
कामाक्षीति सती चाभूत्तस्य लक्षणलक्षिता ।
चिदम्बरेश्वरं ध्यात्वा तावुभौ प्रापतुः सुताम् ॥
सा कुमारी सदा ध्यानसक्ताऽभूज् ज्ञानतत्परा ।
विशिष्टेति च नाम्ना तु प्रसिद्धाऽभून्महीतले ॥
तामष्टमेऽब्दे विप्राय शान्तायाद्भुतकर्मणे ।
प्रददौ विश्वजिन्नाम्ने सर्वज्ञोऽस्याः पिता स्वयम् ॥
सा सदा पतिमद्वैतं ध्यात्वाकाशात्मकं शिवम् ।
तस्याराधनमत्युग्रमाचकार विवेकिनी ॥
तादृशीमपि सन्त्यज्य ययौ विश्वजिदद्भुतम् ।
अरण्यं तपसे कृत्वा मनो निश्चयतां गतम् ॥
तदा प्रभृति सा नारी चिदम्बरमहेश्वरम् ।
तोषयामास पूजाभिर्ध्यानैरात्मगतैः सदा ॥
स देवः सर्वपूर्णोऽपि तस्या वदनपङ्कजम् ।
प्रविश्य विस्मितान् कुर्वन् जनानन्यान् समागतान् ॥
महोग्रतेजसा जुष्टा विशिष्टाऽभूद्यथाम्बिका ।
सर्वैः सम्पूजिता नित्यं पित्रादिभिरुपाश्रिता ॥
अतीते मासि गर्भस्य द्वितीयासीद्दिने दिने ।
चिदम्बरेश्वरं कृत्वा यजमानं द्विजोत्तमाः ॥
तृतीयादिषु मासेषु चक्रुः कर्माणि वेदतः ।

प्राप्ते तु दशमे मासि विशिष्टागर्भगोलत: ॥
प्रादुरासीन्महादेव: शङ्कराख्ये नामत:।
आसीत्तदा पुष्पवृष्टिर्देवसङ्घै: प्रचोदिता।
नेदुर्दुन्दुभयो दिव्या: स्वर्गलोके चिरं सुखम् ॥

इत्यनन्तानन्दगिरिकृतौ आचार्य्यविजये श्रीमच्छङ्करभगवत्-
पादाचार्य्याख्य-श्रीमदद्वैतसिद्धान्त-श्रीपरमगुरोरव-
तारकथा प्रकरणं द्वितीयम् ॥ २ ॥

## तृतीयं प्रकरणम्।



विचित्ररूपतेजोगुणगाम्भीर्य्यादियुक्त: शैशवेऽपि प्राकृत-मागधगीर्वाणादिसर्वभाषाकुशल:सरस्वतीविलास इव समवर्त्तत। तृतीये वर्षे चौलकर्म्म पञ्चमे वर्षे मौञ्जीबन्धं विधुक्तितचक्रु: विप्रौघा:। तदनु विद्यागुरुसमीपे सकृच्छ्रवणादेवावगतसर्वविद्याप्रपञ्चातीत इव समज्ञानवशाज्जीवन्मुक्त इव किलानालस्यादभवद्भगवान् श्रीमदाचार्य्य:। षड्दर्शनमूल इतिहासस्थाणु: निगमशाख: षडङ्गपल्लव: सूत्रपुष्प: मन्त्रशलाटु: ज्ञानपक्वफल: श्रीशङ्करकल्पवृक्ष आसीत्।

स्वर्गे यथा कल्पतरुस्तथा भूमौ हि शङ्कर:।
सुराणां भूसुराणां च वाञ्छितार्थप्रदो गुरु: ॥
वेदे ब्रह्मसमस्तदङ्गनिचये गार्ग्योपमस्तत्कथा-
तात्पर्य्यार्थविवेचने गुरुसमस्तत्कर्म्मसंवर्णने।

आसीज्जैमिनिरेव तद्वचनदर्पोद्बाधकान्दे समो
व्यासेनैव मदीयसद्गुरुरसौ श्रीशङ्कराख्यः चितौ ॥
अद्वैतार्णवपूर्णचन्द्रमभिधापद्माटवीभास्करम्
विद्वत्कोटिसमर्चिताङ्घ्रियुगलं प्रद्वेषिकक्षानलम् ।
व्याख्यावश्यसमस्तवेदजनितप्रोद्यद्विवेकाङ्कुरं
स्वीयद्वागमृतं परात्परगुरुं श्रीशङ्करं तं भजे ॥

अर्द्धेन्दुललाटः पूर्णेन्दुमुखः विशालवक्षा आजानुबाहुरक्षितभ्रः पीनोरुर्गूढगुल्फः स्वल्पपादः शोणनखः करपादमध्यस्थलेषु शङ्खचक्रादिचिह्नितः शिरसि वामभागे त्रिशूलचिह्नं दक्षिणभागे त्वर्द्धचन्द्रचिह्नमेवमङ्कद्वयेन साक्षाच्चिदम्बरेश्वर इव विराजमानः समप्रमाणशरीरः मौञ्जिदण्डाजिनतिलकधारणभिक्षाशनादिभिः शास्त्रविधिरेवमनुष्ठेय इति सर्वमर्त्यान् बोधयन् शिष्यबोधनार्थमुपाध्यायानुज्ञावशात् ब्रह्मासने चतुःषष्टिकलापरागक्के चतुर्दशविद्यामणिविराजिते सहस्रवेदप्रभादीपिते सूत्रेतिहासतन्तुविराजिते तापनीयागममन्त्रयन्त्रतन्त्रादिषट्त्रिंशदङ्गुलोच्छ्रिते प्रागद्रौ बालभानुरिव, ब्रह्माण्डगोलकीले ध्रुव इव जनककृतद्वादशवार्षिके सत्रे याज्ञवल्क्य इव, परीक्षिन्नरेन्द्रस्य ज्ञानबोधसमये शुक इव, मेरुमस्तके तपश्चर्याङ्गीकारोचितव्यास इव, रामकथाप्रदातृत्वकाले वाल्मीकिरिव, भाष्योपदेशकाले पतञ्जलिरिव, देवानां शिक्षासमये सुराचार्य्य इव, नारदोपदेशकाले ब्रह्मेव, धर्म्मराजस्य तत्त्वोपदेशकाले श्रीकृष्ण इव, समासीनः श्रीशङ्कराचार्य्यगुरुरनेकशिष्याणां निगमादिसर्वशास्त्रप्रपञ्चस्य सदुपदेशमाचकार । भोः शिष्य

त्वमेव ब्रह्म कस्माच्चैतन्यस्यैकरूपत्वात् तर्हि अविद्यापरिकल्पितेषु देहेन्द्रियादिषु विद्यमानेष्वपि चेतनस्त्वमेव भवसि। कथं गुरो सुखदुःखभाजो मे चेतनता, जन्मान्तरकर्मवशाज्जनिं प्राप्तस्य जलबुद्बुदवदशाश्वतदेहस्य इन्द्रियादिभिरुपेतस्य जन्मस्थितिमरणप्रवाहलीनस्यारिषड्वर्गपीड़ितस्य दारादीषणात्रयग्रहग्रस्तस्य नहि नित्यानन्दरूपत्वं कल्पयितुमुचितं मदन्तर्वर्त्तिनो जीवस्येति चेन्न तस्यापि किञ्चिज्ज्ञत्वादिधर्माश्रयत्वादिच्छामोहादिपीड़ितत्वाच्च। किञ्च भेदवादिनस्तावदाहुर्जीवः शुभाशुभभोक्ता मायागोलमूढ़ः परमेश्वराद्भिन्नरूपः तस्य परिपक्वज्ञानेनापि सायुज्यभाव एव, किन्तु सुकृतकर्मणा पुण्यलोकप्राप्तिः कपूयादि कर्मणा नरकलोकप्राप्तिरेवमाह शास्त्रं (महती श्रुतिः छान्दोग्यपञ्चमाध्याये दशमखण्डे) अथ यदि ते रमणीयचरणा रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वा वैश्ययोनिं वेति। अथ यदि ते कपूयचरणाः कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वेति तस्मात् सृष्टौ प्रलयेऽपि भिन्न एव जीवः प्रतिशरीरं विचित्रकर्म्माणि करोति, मोक्षो नाम सुखरूपस्थानप्राप्तिमात्रमेव प्रोच्यत इति वदन्ति, तादृशे मयि सत्यज्ञानानन्दलक्षणलक्षितशुद्धचैतन्यकल्पना कथमुचिता स्यादित्यालापिनं शिष्यं प्रत्याह भगवान् श्रीमदाचार्य्यः यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तप इत्यादि शास्त्रप्रसिद्धः परमात्मा जगदुपादानकारणं, स ईक्षत लोकान् नु सृजा इति स इमाँल्लोकानसृजत। अम्भो मरीचिमर-

मापोऽदोऽम्भ इति लोकसृष्टिं विधाय अतलादिसत्यान्त-चतुर्दशलोकरूप विराड्देहे अग्न्यादिदेवान् सम्पाद्य मुखा-दिच्छिद्रेषु यथायतनं प्रविशतेत्युक्त्वा किञ्चिदालोचितवान-भूत्, एवम्भूतस्य साङ्गस्य सेन्द्रियस्य विराड्देहस्य नहि तृप्तिकरमन्नं सम्पादयितुं शक्यं तद्व्यतिरिक्तवस्त्वभावात्। तस्मादन्यदल्पशरीरं स्रष्टव्यमिति विचार्य्य गोदेहं सेन्द्रिया-धिदेवक्षुत्पिपासादिसंयुतं सृष्टवान्, ततस्त्वग्न्यादिदेवताः परमात्मानमब्रुवन् तावदयं गोदेहः यद्दन्तः पशुभाव-मापन्नः वाग्रहितश्च न वै नोयमलमिति अतस्त्वीश्वरः स्वतन्त्रकरुणया दूर्वाङ्कुरमूलोत्पाटनहेतुभूतमुभयतोदन्त-मश्वदेहं सृष्ट्वा अग्न्यादिदेवान् यथायतनं प्रविशतेत्याह, ते तत्र गता अपि सुखलेशमलब्ध्वा पुनर्न वै नोऽयमलमित्य-ब्रुवन्, भगवान् पुनरपि विचार्य्य निर्निमेषकरुणया विवेक-वाक्यसम्पन्नं पुरुषदेहं सृष्ट्वा अग्न्यादिदेवान् यथायतनं प्रविशतेत्याह। ते तत्र गताः सुकृतं वतेति पुरुषो वाव सुकृतमिति सुखमापुः पुनरेवं विचारमाचकार, मनःप्रवृ-त्त्यनुकूला किलेन्द्रियप्रवृत्तिः तस्य प्रेरकाभावे कार्य्यासा-मर्थ्यं स्यात् समनस्कस्येन्द्रियगणस्य जड़त्वात् जड़प्रेरकेण त्वजड़ेनैव भवितव्यं अजड़स्य चैतन्यत्वात् तदन्यस्य जड़-त्वाच्च, तस्मादाह परमेश्वरः कथंन्विदं मदृते स्यादिति। यदिदं देहेन्द्रियतदभिमानिदेवताबच्छरीरजातमस्ति तदिदं सर्वं मदृते भोगस्वामिनं जीवरूपधारिणं विना कथं नु नाम स्यात् तस्माद्भोगस्वामिना मया जीवरूपधारिणा देहः प्रवेष्टव्य इत्यर्थः। ततः परमात्मा स इच्चत कतरेण प्रपद्या

इति तावद् द्वारप्रवेशमार्गौ द्वौ पादाग्रं मूर्द्धि ब्रह्मरन्ध्रञ्च तयोर्मध्ये कतरेण केन मार्गेण प्रपञ्चे प्रविशामीत्यर्थः ननु कथंन्विदमिति वाक्येन आत्मनो जीवरूपेण प्रवेशस्य देहेन्द्रियादिव्यापारपालनमेव प्रयोजनं नान्यदिति चेन्न आत्म बोधस्वरूपस्य प्रयोजनान्तरस्य विद्यमानत्वात्, प्रविष्टस्य देहेन्द्रियादिप्रेरकस्य देहेन्द्रियातीतस्य प्रवेशमात्रेणैव मायागुणवशाज्जीवभावमापन्नस्य सत्यज्ञानानन्तलक्षणलक्षितस्य परमात्मनः सम्यग्ज्ञानादभेदाध्यवसायेन परमात्मनि मनोलये जाते एकमेवाद्वितीयं ब्रह्म नेह नानाऽस्ति किञ्चनेत्यभेदसिद्धिर्भवतीति सोऽहमिति सर्वात्मज्ञानवानिहामुत्रव्यापकः परिपूर्णो भवतीति शास्त्रात् तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति च ब्रह्मविदाप्नोति परमित्यादि च। तदनु स परमेश्वरः एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत, एतमेव मूर्द्धि मध्यभागमेव कपालसन्धिरूपं स्थानं विदार्य्य छिद्रं कृत्वा तन्मार्गेण क्रियाज्ञानशक्तियुक्तः सन् देहमध्यं प्राविशत् यस्माज्ज्ञानोपाधिकस्य मूर्द्धि मध्ये प्रवेशः तस्मान्मूर्द्धि ज्ञानेन्द्रियबाहुल्यं सम्भाव्यते क्रियाशक्त्युपाधिकस्य पादाग्रे प्रवेशात् कण्ठादधोभागे कर्मेन्द्रियबाहुल्यं प्राप्यते एतद्विषयप्रपञ्चस्तु बहुधा मदीयेषु ग्रन्थेषु दर्शितः इत्युक्तः शिष्यः श्रीमद्गुरुपादाम्बुजं नत्वा स्वस्वरूपं विदित्वा सुखमास। एवमनेक शिष्याः श्रीगुरूपदेशमहिम्ना सर्वविद्यासम्पन्ना बभूवुः।

शतैः सहस्रैः सच्छिष्यैः लक्षैः कोटिभिरेव च।

व्याप्तमासीज्जगदिदं शुद्धाद्वैतपरायणैः ॥
श्रुतिस्मृतीतिहासादिचोदिताचारतत्परैः ।
पञ्चयज्ञपरैर्नित्यं पञ्चपूजाविशारदैः ॥
आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरं
ब्राह्मणः पूजयेत्पञ्च पञ्चयज्ञपरायणः ॥
कर्म्म ब्रह्मार्पणं कुर्य्यात्सर्वदेवमयः परः ।
तद्विद्ध्यात्मज्ञस्य सर्वभूतमयस्य च ॥
सर्वस्वात्मनस्यैव सर्वव्यापकतेजसः ।
शुद्धाद्वैतात्मनस्तस्य न वहिःपूजनं विदुः ॥
न कर्म्म लिप्यते तस्मिन् ज्ञानवज्ज्ञात्मकेऽद्वये ।
देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् ॥
प्राणिनां तदविद्योत्थं तावत्कर्म्मविधिर्भवेत् ।
काम्यकर्म्माणि सन्त्यज्य नित्यकार्य्यं समाचरेत् ॥
नित्येन कर्म्मणा हृष्टः परमेशः प्रयच्छति ।
अद्वैतं ज्ञानमत्युग्रं तेन मुक्तो भवेन्नरः ॥
इहामुत्रैकरूपत्वात् प्राणिनः कर्म्मसंचये ।
देहत्यागो विमुक्तिः स्यादिति वेदविदो विदुः ॥
न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त इति श्रुतेः ।
अद्वैतनिरतो यत्र स देशः पुण्यवर्द्धनः ॥
तद्दर्शनपरा ये तु ते मुक्ताः स्युर्न संशयः ।
अद्वैतनिन्दां कुर्वन्ति ये मूढा दुःखभोगिनः ।
ते सर्वे नरकं यान्ति मातृनिन्दापरा यथा ॥

एवमनेकप्रकारेण बहुशिष्यान् धन्यान् कृत्वा अष्टमे वर्षे प्राप्ते श्रीमद्गोविन्दयोगीन्द्रस्य सदुपदेशात्परमहंसाश्रमस्वी-

कारं कृतवन्तः श्रीमच्छङ्करभगवत्पादाचार्य्यसर्वज्ञाः। ननु ब्राह्मणानां ब्रह्मचर्य्याद्याश्रमचतुष्टयमस्ति, तथा च श्रुतिः ब्रह्मचर्य्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वाऽथ प्रव्रजेदिति एतैरेवाश्रमैरेव यथोक्तकर्म्मानुष्ठितैर्मुक्तिर्भवत्येव क्रममन्तरेण ब्रह्मचर्य्याश्रमात्परमहंसाश्रमस्वीकारः किमर्थमङ्गीकृतो भगवद्भिरिति तत्रापि कुटीचराद्याश्रमाण्यतिक्रम्य परमहंसाश्रमस्वीकारश्चेति च प्राप्ते ब्रूमः ब्रह्मचर्य्याद्याश्रमेषु यत्र विरागः उत्पन्नस्तदा तदाश्रमादेव प्रव्रजेव तद्युक्तं, यदीतरथा ब्रह्मचर्य्यादेव प्रव्रजेत गृहाद्वा वनाद्वा अथ पुनरव्रती वा उत्सन्नाग्निको वा यदहरेव विरजेत तदहरेव प्रव्रजेदिति श्रुतेः, कुटीचराद्याश्रमाणां परमहंसाश्रमाधिकारिविषयत्वाभावाद्भगवद्भिः पूर्वब्रह्मानुसन्धानविचक्षणैः भेदगन्धरहितान्तःकरणैः सर्वज्ञैः परमहंसाश्रम एवाङ्गीकृत इति निरवद्यम्।

इत्यनन्तानन्दगिरिकृतौ आचार्य्यविजये अद्वैतस्वरूपकथनं नाम प्रकरणं तृतीयम्॥

---

## चतुर्थं प्रकरणम्।

---

द्वे रूपे वासुदेवस्य चरञ्चाचरमेव च।
चरं सन्न्यासिनां रूपमचरं प्रतिमादिकम्॥ इति वचनबलाद्वासुदेवरूपमास्थाय प्रपञ्चोपास्य इव वर्त्तयन्

अथातो ब्रह्मजिज्ञासेत्यादिव्याससूत्राणां व्यासमनोवृत्ति-तात्पर्य्यप्रकाशकमद्वैतभाष्यं कुर्वन् विश्वजिदिव दिग्विदि-ग्वर्त्तमानानामन्तरादिजयमारभमाणः पद्मपादहस्तामलक-समित्पाणिचिद्विलासज्ञानकन्दविष्णुगुप्तशुद्धकीर्त्तिभानुमरी-चिक्रणादृर्शनबुद्धिवृद्धिविरिञ्चिपादशुद्धानन्तानन्दगिरिप्रमुखैः शिष्यवरैः सेव्यमानः सर्वज्ञः श्रीशङ्करभगवत्पादाचार्य्यः चिदम्बरस्थलात् प्रदक्षिणमार्गेण श्रीमन्मध्यार्जुनं नाम शिवाभिभूतस्थलविशेषं प्राप ।

मध्यार्ज्जुनेशानमदृष्टपूर्वविद्यादिभिः पूजितपादपद्मम् ।
बुद्ध्योपचारैरभजत् परेशं निध्यायतां मोक्षफलैकहेतुम् ॥

तत्र किल भगवान् श्रीशङ्कराचार्य्यः सदाशिवमेवमब्रवीत् स्वामिन् मध्यार्ज्जुन सर्वोपनिषदर्थोऽसि सर्वज्ञोऽसि यदि निगमादीनां तात्पर्य्यगोचरो द्वैतनिर्णयः अद्वैतनिर्णयो वा पारमार्थिकः पश्यतां सर्वेषां जनानां संशयनिवृत्तिं कुर्वित्येवं प्रार्थितो मध्यार्जुनेशः लिङ्गाग्रात् सावयवरूपेण निष्क्रम्य मेघवद्गम्भीरगिरा दक्षिणं हस्तमुद्धृत्य सत्यमद्वैतमिति त्रिरुक्त्वा लिङ्गाग्रेणान्तर्दधे पश्यतां नराणां महदद्भुतमासीत् ।

तद्भक्ताश्च तदा समस्तमनुजास्तद्ग्रामदेशस्थिताः
शुद्धाद्वैतपरायणाः श्रुतिकथासञ्चोदिताचारगाः ।
कृत्वा सद्गुरुमेव शङ्करवरं तद्बोधितप्राग्भव-
श्रीमच्छ्रीपजपादुमागणपतीशार्काच्युतार्चापराः ॥

प्रातःस्नानविशुद्धाश्च पञ्चयज्ञपरायणाः ।
नित्यकर्म्म प्रकुर्वाणा भगवत्प्रीतयेऽनघाः ॥

एवं तद्देशस्थान् ब्राह्मणान् सर्वानद्वैतवादिनः कृत्वा प्रमथैः शङ्कर इव शिष्यसमेतः समुद्रबन्धनहेतुभूतसेतुसमीपे रामेश्वरं नाम प्रसिद्धस्थलं प्रति जगाम।

रामेश्वरं रामकृतप्रतिष्ठं कामेश्वरीभूषितवामभागम्।
महेन्द्रनीलोज्ज्वलदुत्किरीटं भीमेश्वरं त्वामिह पूजयामि॥

इति गङ्गाजलैः शुद्धैरर्चयामास शङ्करम्।
शङ्करः पङ्कजैः पुष्पैरन्यैर्वन्यफलैस्तथा॥

एवं महादेवमर्चयित्वा मासद्वयं तत्र सुखमास। तदानीं किल समागताः,

अद्वैतद्रोहिणः केचिल्लिङ्गाङ्कितभुजद्वयाः।
केचित् फाले त्रिशूलञ्च डमरुञ्च भुजद्वये॥
केचित् फाले लिङ्गचिह्नं हृदि शूलं तथाऽपरे।
केचित् फाले भुजद्वन्द्वे हृदि नाभौ च लिङ्गिनः॥
एवं महेशचिह्नानि धारयित्वा समागताः।
तेषां भेदं क्रमाद्वक्ष्ये षड्विधानां परस्परम्॥

भुजद्वयलिङ्गाङ्कधराः शैवाः, फाले त्रिशूलधारिणो रौद्राः, भुजद्वये डमरुधारिण उग्राः, फाले लिङ्गचिह्नधारिणो भट्टाः, हृदि त्रिशूलं शिरसि पाषाणलिङ्गञ्च धारिणो जङ्गमाः, ललाटे भुजद्वन्द्वे हृन्नाभिषु लिङ्गधारिणः पाशुपता इत्युच्यन्ते ते सर्वे श्रीमच्छङ्करभगवत्पादाचार्यमिदमब्रुवन्, किं भोः सन्न्यासिन्! तव शिवतत्त्वमशेषदोषनिराकरणहेतुभूतमकथ्यमासीत्। शिवस्य जगत्कारणमूर्त्तेः प्रपञ्चभूतरूपाणि पञ्चलिङ्गानि सन्ति, त्रिशूलडमरुगततेजउत्पन्नौ रविचन्द्रौ लिङ्गद्वयं, एवं लिङ्गाष्टकं भगवतोऽष्ट

मूर्त्तय: अन्तर्लिङ्गबहिर्लिङ्गसंयोजनं कृत्वा चिदचिदैक्या-रूढ़बुद्धिवृत्तिः निन्दानिन्दादिद्वन्द्वरहितः सर्वं शिवमय-मिति शिवाङ्कधारी सन् पश्यति स एव शिवः तदाराधना-चेण तन्मयः स एव मुक्तः तस्य ज्ञानमयत्वात् समस्तजनैरु-पासनीयः, शिवस्यैव जगत्कारणता निर्वचनीया एवं किल।

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्द्ध्वरेतं विरूपाक्षं विश्वरूपाय नमोनमः॥

इत्यादिना रुद्रस्य सर्वोत्तमत्त्वं घटते। अस्यार्थः, ऋतमणुस्वरूपं सत्यं महद्रूपं परं ब्रह्म एतद्विशेषणचतुष्टय-युतं पुरुषं पुरीततिमध्ये हृदयकमलकर्णिकायां वहिःप्रदेशे व्यापकरूपत्वेन शायिनं कृष्णपिङ्गलं कण्ठे कृष्णवर्णं, जटासु पिङ्गलवर्णं ऊर्द्ध्वरेतमूर्द्ध्वमुखरेतसं विरूपाक्षं विरूपाण्यर्केन्दु-वह्निरूपाणि त्रीणि अक्षीणि यस्य तं विश्वरूपाय चित्या-द्यष्टमूर्त्तित्वेन व्यापकत्वेन विश्वरूपः तस्मै तं नमो नम इति चतुर्थीद्वितीययोरेकीकारश्छान्दसः। तथा

द्यौर्मूर्द्धानं यस्य वेदा वदन्ति
खं वै नाभिश्चन्द्रसूर्य्यौ च नेत्रे।
दिशः श्रोत्रे वाग्विहिताश्च वेदा
मुमुक्षुर्वै शरणमहं प्रपद्ये॥

इत्यस्यायमर्थः, यस्य परमेश्वरस्य मूर्द्धानं शिरः द्यौः द्युलोकः स तु मेघमण्डलोपरिप्रदेशात् ब्रह्माण्डकर्परपर्य्यन्तं वेदा वदन्ति द्यौरेव परमेश्वरस्य मूर्द्धेत्यर्थः। तस्य नाभिः खं आकाशं वदन्तीत्यनुषङ्गः चन्द्रसूर्य्यौ नेत्रे चकारादग्नि-

सेत्यर्थः। दिशः श्रोत्रे कर्णावित्यर्थः वाग्विवृताश्च वेदा यस्य वाक्यादेव विस्तृता वेदाः चकारेण इतिहासपुराणादिक-मित्यर्थः॥ तं परमात्मानं मुमुक्षुरहं शरणं प्रपद्ये शरणं यामीत्यर्थः वैशब्देन शरणागतानां मोक्षः सिद्धो भवति, एतादृशं शरणागतमोक्षप्रदं, जन्ममरणारण्यदावानलमाश्रित्य तदीयमुद्राचारसम्पादितदृढ़भक्तिनिरताः शास्त्रे शिवके वसन्ति। किञ्च, अथर्वशिखायां, जगत्कारणानुचिन्तनप्रकरणे, कारणन्तु ध्येयः सर्वैश्वर्य्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्य इति शिवस्य जगत्कारणता प्रतिपाद्यते। अथर्वशिरसि देवैः कस्त्वमिति प्रश्ने कृते तदा पृष्टः परमेश्वरः सोऽब्रवीदहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादि, मत्तो व्यतिरिक्तः मदन्यः कश्चनेति भगवदुक्तेः तस्यैव सर्व्वोत्तमत्वं घटते सदाशिवश्चेति सामान्यशब्दा अपि तत्परा एव तेषां जगदुपादानकारणपरत्वात् वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्कर इति वचनस्यायमर्थः इदं जगदधिकृत्याग्रे सृष्टेः प्राक्तनकाले वसत्यस्मिन् प्रपञ्च इति वासुः वासुश्चासौ देवश्च वासुदेवः उकारच्छान्दसः स परमेश्वरः, तस्य सर्वप्रपञ्चलयकर्त्तृत्वात् स एक एवासीत्, जगदग्रे स एक एव वर्त्तत इत्यर्थः, न ब्रह्मा चतुर्मुखः, न च शङ्करो विष्णुः, शं सुखं जीवनं करोतीति व्युत्पत्तेः तस्य स्थितिकर्त्तृत्वात् सर्वप्राणिरक्षणोद्योगकर्त्तेत्यर्थः। प्रलये जगदभावाज्जगद्रक्षकाभावत्वमर्थतः सिद्धमेव, तयोः परमेश्वरेच्छाजातत्वात् मकारादुकारस्य उकारादकारस्य जन्मदर्शनात्।

आनामेवंस्वरूपो रूपमागत्यानेयं वपुः ।
आशीर्षाद्रुद्रमीशानन्तदग्रे सर्वतः शिवम् ॥

इत्यादिना नरसिंहस्वरूपध्यानेन शिवपरतत्त्वस्य रुद्रत्वात् परमेश्वरस्य कलारूपाणामेकादशरुद्राणां मध्ये शङ्करो विष्णुरिति प्रसिद्धः रुद्राणां शङ्करश्चास्मीति श्रीकृष्णवचनगीतादर्शनाच्च । शिवरहस्ये रुद्रयामले च दुर्वासोमुखेरुपदेशकाले महादेववचनानि ।

अहमेकाक्षरः कर्त्ता परात्परतरः शिवः ।
सदात्मा ब्रह्मविष्ण्वोश्च लोकानामादिकारणम् ॥
पुराणः पूर्वगः पूर्वो ज्येष्ठः श्रेष्ठोऽहमद्वयः ।
मदिच्छारूपिणी शक्तिर्जगत्संहारकारिणी ॥
सुप्ता मय्येव सा सृष्टा पुनः सृष्टौ मयाऽनघ ! ।
सा महत्तत्त्वमुत्पाद्य त्रिगुणाङ्कुरकारणम् ॥
अहङ्कारं समुत्पाद्य त्रैगुण्यं पूर्वतस्ततः ।
गुणत्रयात्मकान् कृत्वा रुद्रानेकादशाऽव्ययान् ॥
राजसं सृष्टिकर्त्तारं कारयामास सादरम् ।
सात्त्विकान् पालनपरान् तामसान् प्रलयेश्वरान् ।
क्रमादवर्णात् सञ्जातानुवर्णाश्च सवर्णतः ।
तेषु मुख्यतमा ब्रह्मविष्णुरुद्रा इति त्रिधा ॥
अन्ये तदनुवृत्तिस्था एवमेकादशेश्वराः ।
तेषां विभूतयः सर्वे देवा लोकाश्चराचराः ॥
पृथक् पृथङ्नामयुतास्तत्तत्कर्मानुसारतः ।
ते सर्वे प्रलये ब्रह्मतेजस्येव लयं गताः ॥
राजसे रक्तवर्णे च स तु ब्रह्मा समस्तभृत् ।

कृष्णो नारायणस्यैव तेजस्स्तोऽभवत् पुरा॥
रुद्रस्य शुक्लवर्णो तु ह्यस्तो नारायणः स्वयम्।
स तु रुद्रः प्रकृत्यन्तर्गतः शुक्लेन तेजसा॥
मदिच्छा शुक्लवर्णा सा मय्येव विलयं गता।
अतोऽस्मयऽनन्तः सर्वार्थवेदैरपि न गोचरः॥
वेत्ति कश्चन मन्मायां जन्मस्थितिलयावहाम्।
अतो रुद्रार्चनपरा रुद्रसूक्तजपान्विताः॥
पञ्चाक्षरीजपपरा रुद्राक्षाभरणैर्युताः।
भूतिभूषितसर्वाङ्गाः सदा ध्यानपरायणाः॥
ईश्वरं रुद्रमव्यक्तं व्यक्तरूपं जगन्मये।
येऽर्चयन्ति नरश्रेष्ठास्तेषां मुक्तिः करे स्थिता॥
अतस्त्वं भूतिरुद्राक्षधारणं कुरु सर्वदा।
कुरु नित्यं महादेवपूजनं भक्तिसंयुतः॥
दुर्वाससे मुनीन्द्राय ह्येवमुक्त्वा सदाशिवः।
अन्तर्दधे तदाचारसक्तोऽभून्मुनिसत्तमः॥ इति॥

अतो दुर्वास-आदिभिस्तत्स्वरूपविज्ञैरुपासितं शिवतत्वाचारकथनमिति निरवद्यम्। अथर्वशिरसि, अथ पुरुषो ह वै श्रीनारायणोऽकामयत प्रजाः सृजेयेति नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च खं वायुः ज्योतिरापः पृथिवी विश्वस्य धारिणी नारायणाद्ब्रह्मा जायते नारायणात् प्रजापतिः प्रजायते रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते नारायणात् प्रवर्द्धन्ते नारायणात् प्रलीयन्ते अथ पुरुषो ह वै नारायणो ब्रह्मा नारायणः शिवश्च नारायणः शक्रश्च नारायणः अहंश्च नारा-

यश: अधश्च नारायण: आकाशश्च नारायण: अन्तर्बहिश्च नारायण: नारायणादेवेदकं सर्वं यद्भूतं यच्च भव्यं निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यात: शुद्धो देव: एको नारायण: न द्वितीयोऽस्तीत्यादिकतत्त्वोपनिषद्वाक्यमर्थ:, नरो ब्रह्मा प्रथमजीव: सृष्टे: पूर्वमेव जातत्वात् तत्कृता सृष्टिरिति प्रसिद्धे: राजसगुणप्रधानो रुद्र: तदादयो विष्णुरुद्रेन्द्रादयश्चतुर्दशलोकवासिन: प्राणिन: तेषां समूहो नारे तदेवायनं स्थानं यस्य आत्माकारेण सर्वव्यापक: परमेश्वर: रषाभ्यां नो ण: समानपद इति सूत्रेण नस्य णत्वे कृते नारायण इति रूपं निष्पन्नं तस्यैवांशा: सर्वे देवा: नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरीक्षे ये दिवि येषामन्नं वातोवर्षमिषभस्तेभ्यो दश प्राचो दश दक्षिणा दश प्रतीचोर्दशोदीचोर्दशोर्द्ध्वास्तेभ्यो नमस्ते नो मृडयन्त्वित्यादिप्रमाणात्। नमो ज्येष्ठाय च कनिष्ठाय चेत्यादिना गुणातीतब्रह्मणो परमेश्वरे ज्येष्ठत्वमर्थत: सिद्धं तस्य सर्वोत्पत्तिकारणत्वात् कनिष्ठत्वन्तु मकारविलक्षणे प्रकृतिजाते रुद्रे वर्त्तते उकारामकारयोस्तज्जन्यत्वात् तदात्मकत्वं सिद्धम्। यतो ब्रह्मविष्णुरुद्रास्ते संप्रसूयन्त इति श्रुते:। कारणकार्य्ययोर्ज्येष्ठकनिष्ठभावो युक्त एव। स नारायण: अकामयत इच्छां कृतवान् किमिति प्रजा: सृजेयेति तस्मात् खं वायुर्ज्योतिराप: पृथिवी विश्वस्य धारिणी अजायन्त पृथिवी कीदृशीत्युक्ते विश्वस्य प्रपञ्चस्य धारिणीत्यर्थ:। तदनु नारायणात् प्राणो जायते मन: सर्वेन्द्रियाणि चेति पाठक्रममन्तरेण कथमित्युक्ते तैत्तिरीये। एतस्मादात्मन आकाश: सम्भूत: आकाशाद्वायु:

वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नमन्नात्पुरुषमित्यादि भूतसृष्टिं विना प्राणादिसृष्टेरभावात् प्राणानां वायुरूपत्वाच्च प्राणादिसृष्टिः भूतसृष्ट्यनन्तरभाव्येव भवितुमर्हति। यद्वा प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात् पञ्च तन्मात्राणीति सृष्टिक्रमदर्शनात् अहङ्कारादेव भूतोत्पत्तिर्युक्तेव भाति तस्य गुणत्रयात्मकत्वाद् भूतानामपि तथात्वात्। अतः सगुणाद्रुद्रात् तमोजाग्राणमनोगुणसृष्टिरुचिता, कार्य्यस्य कारणानुरूपत्वात् कुलालादिना घटादिवत्। रुद्रविष्णुब्रह्मादिहृदयपुण्डरीकेषु व्यापकरूपेण स्थितस्यात्मनः सकाशात् भूतादिसृष्टिं केचिदिच्छन्ति। सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति आकाशाद्वायुरित्यादि एतच्छब्देन यो वा परमेश्वरः स्वयं निर्गुणोऽपि सर्वप्राणिबुद्धिगुहाविहरणशीलः सन्, तस्मात् भूतोत्पत्तिरिति। ब्रह्मा भूतोत्पत्त्यनन्तरं सृष्टिं करोमीति बहुकालं विचार्य्य स्वान्तर्गतमात्मतेजः सूर्य्याकारेण सृष्टवान् मन एव चन्द्रं सत्त्वमङ्गारकं वाङ्मयं बुधं ज्ञानसुखमयं गुरुं शुक्रमयं शुक्रं क्लेशमयं शनिं चकार। सूर्य्यादिगोलकान्यपि परमेश्वरेणैव प्रतिभान्ति।

न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेवभान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति॥ इति श्रुतेः

तस्मान्नारायणाद्ब्रह्मा जायते नारायणात्प्रजापतिः

प्रजापरिपालनशील: स्थितिकर्त्ता विष्णुर्जायते अन्ये नव रुद्रा वसव: सर्वाणि छन्दांसि एतानि सर्वाणि नारायणादेव समुत्पद्यन्ते तस्य जगत्कारणत्वात् तस्मादेव प्रवर्त्तन्ते तस्मिन् लये लीयन्त इत्यर्थ:। अथ पुरुषो ह वै नारायण इत्यादिना तस्य विश्वरूपत्वं प्रतिपादितम्। निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यात: शुद्धो देव: एको नारायण इति जगदतीतस्य परमात्मनो लक्षणमेतत्, कलङ्कं नाम पुण्यपापबन्ध: तदभावान्निष्कलङ्क:, अञ्जनं अज्ञानं तदभावान्निरञ्जन: अयमात्मा अन्यो वा आत्मेति संशयाभावान्निर्विकल्प: आख्यातं नाम रूपगुणकर्म्मादिस्तदभावात् निराख्यात:, शुद्ध: शुक्लतेजोमय:, यच्छुक्लं तद्ब्रह्म, कं ब्रह्म खं ब्रह्म आकाशशरीरं ब्रह्मेति।

अचिन्त्यमव्यक्तमनन्तरूपं तथारसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महत: परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते॥

इति श्रुतिभ्य:।

दिव्यत इति देव: तेज: तदन्यत्वाभावात् एक: एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेति श्रुते: आत्मा वा इदमेक एवाग्र आसीदिति एक एव रुद्रो न द्वितीयोऽवतस्थ इति च। स नारायण: अद्वितीय: प्रलये द्वितीयसत्तामात्राभावात् एक एव भाति, एकमेव ब्रह्म विभाति निर्वाणमिति श्रुते:। महोपनिषदि। एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ नेमे द्यावापृथिवीत्यादि श्रुतेरयमर्थ:, नारायण एक एव आसीद्यदा कार्याभाव: स तु प्रलयो न तत्र ब्रह्मविष्णुभाव: ईशानशब्दवाच्यो

विष्णुः किमेतयोरभावस्य सिद्धत्वात् अग्नीषोमयोरभावः शङ्कनीयः ? नेमे द्यावापृथिवीति सिद्धमेव । एवं

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् ।
किमावरीवः कुहकस्य शर्म्मन्नम्भः किमासीद्गहनं गभीरम् ।
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेत्या ॥

इत्यादि, ऋङ्मन्त्राः ईश्वर एव जगल्लयादीन् प्रतिपादयन्ति । अस्यार्थः । असत् अदर्शनयोग्यभूताकाशवायूतदादि तादृग्वस्तु नासीत् तदानीं प्रलये न विद्यत इत्यर्थः। सत् तेजोऽम्बुपृथिव्यस्तदादि वस्तु च नो आसीत्, रजःकारण पृथिव्यपि नासीत् व्योमकारणमणुरूपं अपरः कारणान्युदकवायवः नासुः, लिङ्गव्यत्ययः छान्दसः । कुहकस्य ब्रह्मग्रामस्य आवरीवः आवरणानि महदहङ्कारादि सप्त शर्मन् ब्रह्माण्डञ्च किमासीत् किञ्च नासीदित्यर्थः । तदण्डोपरि विलसितं गहनं दुष्प्रविष्टं गभीरं नमितप्रवेशे सान्द्रतया व्याप्तमम्भस्तोयं किमासीत् तदपि नासीत्यर्थः । मृत्युः सर्वलोकवासप्राणिप्राणहर्त्ता नासीत् । तर्हि मृत्युरहितसमये अमृतं मृत्युनिवर्हणहेतुभूतं अमृतं मृत्योस्तेजस्तिमिरयोरिव परस्परवैषम्यदर्शनात् विपक्षाभावे सपक्षाभावस्य श्रेयस्त्वादमृतस्याप्यभाव इत्याह अमृतं नासीत् । कथमित्युक्ते ईश्वरव्यतिरिक्तसर्वाभावस्य युक्तत्वात् तदभाव उचित एवेत्यर्थः रात्र्यह्नोः कारणाभावात् कार्य्याभावः सिद्ध एव । ननु सर्वाभावे ईश्वरस्याप्यभावो भवतु नाम, एकस्मिन् काले स्वत एव जगदस्तं गतं भवति, अन्यस्मिन्

काले पुनर्निजरूपेणोत्थितं भवति। तथेदं तर्ह्यव्याकृत-मासीत् तन्नामरूपाभ्यामव्याक्रियतेति श्रुतेः अशोकपुष्पवि-कासादिवत्कालतः प्रपद्यते। जगद्बीजं तु जगत्कर्मैव।

कर्मणा जायते लोकः कर्मणैव हि लीयते।

इति जैमिनिराचार्यो मन्यते। पापकर्मशीलस्य नरस्य पुण्ययोनिसम्भवत्वमीश्वरेण कथं न कृतं कर्मानुकूलं अस्तीति चेत् कर्मैव स्वमार्गेण जीवं बुद्ध्यादिलिङ्गशरीरबन्धं नयति तस्य घटकत्वाघटकत्वयोस्तुल्यसमर्थत्वात् अतः कर्मणा जग-त्युत्पद्यमाने किमन्तर्गतेनेश्वरेणेति प्राप्ते ब्रूमः तत्सूत्रे एकं सन्तं तद्बहुधा कल्पयन्ति बहुधा नानाप्रमाणैः सर्वाभावे प्रलये सन्तं वसन्तं परमात्मानमेकमद्वितीयं कल्पयन्ति वेदाः स्वय-मेव जगज्जन्मादि कारणं ब्रह्म निरुपाधिकं वर्त्तत एवेत्यर्थः शाखान्तरे तैत्तिरीये। असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो विदुरिति। ब्रह्म असत् असत्यं असदप्रमाणं चेद्वेद सः असन्नेव भवति अस-न्नास्तिको भवति ब्रह्म बृहत्त्वात् व्यापकत्वाच्च तथा प्रसिद्धं शुद्धबुद्धमुक्तस्वरूपं ब्रह्म अस्तीति वेद चेत् वेदितुः फलमाह सन्तमेनं ततो विदुरिति। एवमीश्वरसद्भावे प्रमाणस-द्भस्थित्या तस्य मनोवागतीतत्वे न दुःसाध्यत्वात् तदिच्छा-सम्भूतमकारप्रधानसगुणरुद्रस्योपासनं तच्चिह्नाङ्कनं युक्त-मेव। एवं प्राप्ते प्राहुराचार्या भोः तप्तलिङ्गाङ्कितभुजद्वय विद्वेषवीरनामक सत्यमुक्तं भवता ऋतं सत्यं परं ब्रह्मे-त्यादयः भवदुक्ताः सर्वाः श्रुतयः परमेश्वरं ब्रह्मांशेन सृष्टिं कुर्वाणं विष्णंशेन पालनं कुर्वाणं रुद्रांशेन लयं कुर्वाणं

शुद्धमद्वैतरूपमव्ययमनादि ब्रह्म प्रशंसन्ति ताः भवता व्याख्याताः, मयापि च व्याख्याता एव तात्पर्य्यस्यैकरूपत्वात्, किन्त्वेतावन्मात्रं विरुद्धमप्रमाणमस्ति तप्तलिङ्गाद्यङ्कनन्धारयितव्यमिति तदसत् धारणबीजश्रुत्यादिप्रमाणाभावात् शिष्ट्माणत्वेनैव ब्राह्मणोचितवेदोक्तगर्भाधानादिसद्धर्म्मसंस्कृतस्य शरीरस्य निर्मूलतप्तता कथं श्रेयःपरम्पराजनिका भविष्यति, परन्तु प्रत्यवायधात्रेरव । कथमिति उच्यते श्रूयतामसे ।

नाभेरूर्द्ध्वं सोमपास्तु नाध्यधस्तादसोमपाः ।
देवास्तिष्ठन्ति विप्रेन्द्रे वेदवेदाङ्गपारगे ॥
शिखां शिरो ललाटञ्च कर्णौ प्राणं कपोलकम् ।
जिह्वायाञ्च तथा चौष्ठौ चिबुकं कण्ठमेव च ॥
अंसद्वयं भुजद्वन्द्वं बाहू हस्तयुगन्तथा ।
वक्षोनाभिः कटिर्लिङ्गं वृषणं चोरुजानुकम् ॥
गुल्फौ पादौ समाश्रित्य मदाद्याः सर्वदेवताः ।
पितर ऋषयश्चैव सामाद्याङ्किकमिश्रितैः ॥
नित्यादिकर्म्मभिस्तृप्ता भवाम्रे नात्र संशयः ।

इति ब्रह्मारुणकेतुसम्वादः । श्रुतिश्च । यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्मात् तथाविधतनोर्जीवनदशायां क्षते तापे देवाः पलायन्ते तस्मायःसाविध्यान्मनुष्य इति ।

तथाविधतनोरस्य तापनाङ्कं करोति यः ।
एनं शप्ता पलायन्ते देवाः शीर्षादिवासिनः ॥
पतितोऽयं भवत्येव शूद्रवर्ज्जितकाष्ठवत् ।

व्याधिं विना कर्म्मयोग्ये विप्राङ्गे चिह्नमीक्ष्य च ॥
लोकेश्वरं भानुमीक्षेदथवा रुद्रमाविशेत् ॥

इत्यादिबहूनि वचनानि प्रमाणानि सन्ति। श्रुतावपि, योऽन्यां देवतामुपास्ते अन्योऽहमस्मीति न स वेद यथा पशुरिति। यः पुरुषः स्वस्मादन्यां देवतामुपास्ते असौ देवता अन्या सर्वज्ञा सच्चिदानन्दादिलक्षणसम्पन्ना देवता-द्वारा किञ्चिज्ज्ञत्वादिगुणविशिष्टोऽहमन्योऽस्मीति न स वेद स पुनर्वेदज्ञानसम्पन्नो न स्यादित्यर्थः उक्तार्थं दृष्टान्तेन दृढ़यति यथा पशुरिति पशोर्यथा विवेकज्ञानाभावः तथैवेत्यर्थः परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमा-यान्नास्त्यकृतः कृतेन कर्म्मणेत्यादिमुण्डकोपनिषदुपदेशवशात् ब्राह्मणः कर्म्मचितान् कर्म्मसम्पादितान् अनित्यान् लोकान् दृष्ट्वा निर्वेदमायात्। अकृतो मोक्षः कृतेन कर्म्मणा नास्तीति तस्मात् मोक्षप्राप्तये, तद्विज्ञानार्थं स गुरु-मेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्या-दिना गुरुमभिव्रजेत् अनेन सद्गुरूपदेशेनैव ब्रह्मलक्ष-णाभिज्ञः सर्वाशुभकर्म्मनिर्मूलनपरः संसारार्णवमतिक्रम्य सर्वावस्थासु आत्मानं ध्यात्वा मुक्तो भवति। न वह्निचि-ह्निततप्ताङ्गादिना प्रयोजनम्, चर्म्मदाहनिमात्रफलमस्ति लिङ्गिनः, मुक्तिस्तु ज्ञानतेजोनिरस्तान्तराज्ञानान्धकार-स्यैव भवति। केवलं रुद्रोपासनायाः पुण्यलोकप्राप्ति-रेव फलं न तु मुक्तिः तस्यास्तु जीवेशैक्यानुसन्धानभावना-लभ्यत्वात्।

तं दुर्दर्शं गूढ़मनुप्रविष्टं गुहाहितङ्गह्वरेष्ठं पुराणम्।

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥

इति।

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्॥

इति।

अशरीरं शरीरेषु अनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥ इति

तस्माद्गुरुकटाक्षागतशुद्धाद्वैतविद्यामाश्रित्य अमीदृक्-
स्वतत्त्वफलरसपानेन तृप्तो भवेदिति श्रीमच्छिराचार्य्यैरेव-
मुक्तः विद्वद्वीरमामको लिङ्गच्छदशैवीरिदमाह,

स्वामिन्! त्वमेव शरणं मम सर्वदाऽसि-
संसारसर्पविषदष्टदनुं नयाशु।
मामद्य युष्मदतिनिर्म्मलवेदवाक्यै-
र्नष्टा भिदाऽस्मि शिव एव जगत्पिताऽसि॥

महादेवार्चनफलं गुरो! त्वमसि सत्तम!।
अद्वैतामृतदातृत्वे रुद्रादप्युत्तमोत्तमः॥

इति आचार्य्यशिरोमणिं स्तुतिपात्रं मुहुर्मुहुर्नत्वा तदी-
यचरणोदकपानं तदुक्ताचारलक्षणं शिरसा परिगृह्य स्व-
कुलग्रामदेशस्थान् सर्वानप्यद्वैतवृत्तिनः कृत्वा श्रीमत्परमहं-
साचार्य्यगुरुमभिवाद्य सुखमास।

इत्यनन्तानन्दगिरिकृतौ शैवमतनिवर्हणं नाम चतुर्थं
प्रकरणम्।

---

# पञ्चमं प्रकरणम्।

—:::*:::—

एवं लिङ्गादिधारणकारणे शिवमते निरस्तेऽप्याराध्याः केचन पीठार्चननिरताः प्राणलिङ्गधारिणो निरस्तशेषभक्ताः मारी लिङ्गधारिणः शुभ्रविभूतिभूषितसर्वाङ्गाः शिरःकण्ठबाहुषु सहस्रपरिमितरुद्राक्षमालाभूषिताः प्रतिपन्नचण्डभैरवविपन्नसुखभक्तागमगणपरमतकालानलादयः भीमङ्कराचार्यं दृष्ट्वा इदमूचुः वाक्यं सन्न्यासिन्! मायाशेषधारीव समागत्य षड्विधशैवाचारं सकलवेदप्रमाणं परित्यज्य विद्वेषवीरादीन् मतभ्रष्टान् कृत्वा गन्तुमायतो भवसि? प्रतिपन्नचण्डभैरवमाराध्यमतप्रभाचार्यं मां विद्धि, किं शैवमतं नास्ति। शाम्भवात्तूत्तमं प्रोक्तं वैष्णवं मुनिसत्तम!। वैष्णवादधिकं शैवमित्यादिना नारदं प्रति ब्रह्मोक्तेः शैवमतस्य श्रेष्ठत्वं दर्शितम्। तादृशमनुत्तमोत्तममतं परित्यज्य ब्राह्मणस्य निपतनं वृक्षाग्रमारूढस्य पुरुषस्याधःपतनमिव प्रतिभाति। ब्राह्मण्यमूलाद्वैष्णवमतशाखामवलम्ब्य शैवाग्रंगतस्य रूढपतनं किमर्थं भवद्भिः कृतम्। मताधिदेवस्य रुद्रस्य परमत्वं नास्तीति यदुच्यते तत्परमत्वं नमस्ते रुद्र मन्यव इत्यादि शतरुद्रमन्त्रेषु सर्वजगदुपादानकारणमभूत्। वेदपुरुषोऽपि रुद्र एत्यर्थमुपक्रम्य तत्स्वरूपस्यातिरौद्रत्वात् सर्वोत्तमत्वाच्च वेपमानशरीरः चिरं तूष्णीं स्थित्वा स्वापराधनिवृत्तये प्रतिपदे नमस्कारपुरःसरमेव स्तुतिमकरोत् हे

रुद्र ! ते तव मन्यवे क्रोधाय चतुर्दशभुवनक्षयहेतुभूताय नमः उत तदनन्तरं ते तव क्षयहेतवे इषवे बाणाय नमः हे रुद्र ! ते तव धन्वने चापाय नमोऽस्तु ते बाहुभ्यां पाशुपतपिनाकधारिभ्यां नमः इत्यादिषु मन्त्रेषु प्रतिपदे बहुधा देवं नत्वा निवृत्तापराधोऽभूत् । उतामृतत्वस्येशान इति पुरुषसूक्तमध्यवर्त्तिना मन्त्रवरेण धर्म्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मध्ये मोक्षरूप पुरुषार्थस्य श्रेष्ठत्वात् तस्य ईशानः रुद्रः कर्त्तेत्यनेन शिवस्य सर्वोत्तमत्वम् । किञ्च पुरुषसूक्तस्याधिदेवं रुद्रः तस्य ऋषिर्नारायणः पुरुषो देवतेति पुरुषो रुद्र एव, तस्य सहस्रशीर्षत्वं सहस्राक्षत्वं सहस्रपात्त्वं सिद्धमेव नमः सहस्राक्षाय शतधन्वन इत्यादि बहुश्रुतिभ्यः ।

विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् सं बाहुभ्यां धमति सं पतत्रैरित्यादिश्रुतेः ।

इदमिदानीं चोद्यम् ।

सहस्रशीर्षं देवं तं विश्वाक्षं विश्वसम्भवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥

इत्यादिना सहस्रशीर्षादिसाम्यात् सूक्तं नारायणपरमिति चेन्न उपसंहारविरोधात् । उपक्रमस्य दौर्बल्ये उपसंहारवशादुपक्रमनयनस्य मीमांसासिद्धत्वात् । प्रथमशाखाब्राह्मणे शतपथे श्वेताश्वतरोपनिषदि पुरुषसूक्तमुक्त्वा उपसंहार एवं क्रियते ।

ततो यदुत्तरतरं तद्रूपमनामयं,
य एतद्विदुरमृतास्ते भवन्ति,

अथेतरे दुःखमेवापि यन्ति ।

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।

सर्वव्यापी स भगवान् तस्मात्सर्वगतः शिवः ॥ इति ।

एवमुपक्रमोपसंहारयोरेकवाक्यता स्यात् सहस्रशीर्षा पुरुष इत्यनेन सर्वाननशिरोग्रीव इति प्रतिपादितस्यार्थस्यानुकूलत्वात् । तन्मध्ये ह्रीश्च ते लक्ष्मीश्च ते पत्न्यौ अहोरात्रे पार्श्वे इति वाक्यद्वयेनापि प्रतिपादितः शिव एव । ह्रीः गङ्गा लक्ष्मीः पार्वतीत्यर्थः । तत्पतित्वं रुद्रस्य घटते । उक्तञ्च स्कान्दे ।

हिमाग्रादपतच्छीली गङ्गा रुद्रस्य वेगतः ।

तदीयभारसम्भ्रान्तो ह्यवादीत्तां सदाशिवः ॥

ह्रीमती भव नात्युच्चैर्वर्त्तं संप्राप्य मामिह ।

पुरुषं पुरुषश्रेष्ठं ब्रह्मविद्यादिकारणम् ॥

सा तं नत्वा महादेवं तदाप्रभृति भक्तितः ।

ह्रिया जटासु मिलिता ह्रीरिति प्रोच्यते बुधैः ॥

रुद्रयामले ।

तस्याङ्कमञ्चमारूढा शक्तिर्माहेश्वरी परा ।

महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥

तस्यास्तेजःकणाज्जाता लक्ष्मीवाक्कोटयः पुरा ।

शिवतेजःसमुद्भूता हरिब्रह्मादिकोटयः ॥

क्रियन्ते पुनरेवैते तत्र तत्र लयानुगाः ।

इति गङ्गालक्ष्मीपतित्वं शिवस्यासाधारणमित्यविरुद्धम् । उत्तरवाक्ये अहोरात्रे पार्श्वे अहश्च रात्रिश्च अहोरात्रे तस्य द्विवचनान्तत्वात् अहोरात्रे पार्श्वे यस्य, अहो-

शावपार्श्वत्वं च रुद्रस्यैव। दक्षिणपार्श्वस्य शुद्धस्फटिकसच्छायत्वात् अघोररूपपार्श्वत्वम्। वामपार्श्वस्य देवीभागत्वेन श्यामवर्णत्वाद्वामरूपपार्श्वत्वञ्च रुद्रस्यासाधारणमेतत्।

अतः सूत्रस्य शिवपरत्वेन शिवस्यैव जगत् कारणत्वात् सर्वापेक्षया तन्मतस्य प्राबल्यं प्राप्तम्। अथर्वशिरसि॥ भगवता परमेश्वरेण देवान् प्रति स्वस्य सर्वात्मकत्वं प्रतिपादितम्। सोऽहं नित्यानित्योऽहं ब्रह्माहं उपाङ्गः प्रत्यङ्गोऽहं दक्षिणश्चोदञ्चोऽहमधश्चोर्द्ध्वश्च दिशश्च विदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं गायत्र्यहं सावित्र्यहं सरस्वत्यहं त्रिष्टुप्जगत्यनुष्टुब्चहं छन्दोऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्य्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहमृग्यजुःसामाथर्वाङ्गिरसोऽहमक्षरमहं क्षरमहं गुह्योऽहं गोप्योऽहं अरण्योऽहं पुष्करमहं पवित्रमहमग्रञ्च मध्यञ्च वहिश्च पुरस्ताद्दशसु दिक्ष्ववस्थितमनवस्थितञ्च ज्योतिरित्यहमेवं सर्वे च मामेव मां यो वेद सर्वान्वेदेत्यादि भगवतो विश्वरूपत्वं प्रदर्शितं व्यापकचैतन्यस्य रुद्रस्यैव, रुदत्या स्वशक्त्या लोकान् द्रावयतीति रुद्रः ब्रह्मादिप्रलयकर्त्तेत्यर्थः॥ अत एवोक्तं शिवरहस्ये।

ध्येयत्वे तव साक्षिणो मुनिगणाः ज्ञानप्रदत्वे शुको
वन्द्यत्वे निगमाः स्वभक्तविमताक्रान्तौ कृतान्तादयः-
नित्यत्वे भगवान् पितामहशिरःस्रग्वृन्दमाद्यन्तयोः
शून्यत्वे च वराहहंसवपुषौ पद्माक्षपद्मासनौ॥

इत्यादिप्रमाणैः शिवस्य सर्वात्मकत्वं हरिब्रह्मेन्द्रादि-

कर्त्तृत्वं घटते तत्तन्नानात्मत्वलिङ्गरुद्रविभूत्यादिधारणात् पीठाद्यर्च्चनया रुद्राध्यायजपेन च सर्वपापविनिर्मुक्तः शिवसायुज्यं प्राप्नोतीति निरवद्यम्।

उक्तञ्च स्कान्दे रुद्रप्रशंसाकाण्डे।

स्तेयं कृत्वा गुरुदारांश्च गत्वा सुरां पीत्वा ब्रह्महत्याञ्च कृत्वा।
भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः॥

कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते।
बहुनाऽत्र किमुक्तेन यस्य भक्तिः शिवे दृढ़ा।
महापापौघशापाद्यः कोटिशस्तोऽपि मुच्यते॥

इति शिवगीतादृढोक्तेः। पुनरपि शिवगीतासु मुनीन् प्रति सूत इदमाह।

धर्म्मार्थकाममोक्षाणां पारं शास्त्रस्य येन वै।
मुनयस्तत् प्रवक्ष्यामि व्रतं पाशुपताभिधम्।
कृत्वा तु विरजां दीक्षां भूतिरुद्राक्षधारणम्।
जपंस्तु वेदसाराख्यं शिवनामसहस्रकम्।
सन्त्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्स्यथ॥
ततः प्रसन्नो भगवान् शङ्करो लोकशङ्करः।
भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यतीत्यादिकम्॥

तत्र विपक्षमूल इदमुवाच तैत्तिरीये नारायणोपनिषदि कद्रुद्राय प्रचेतसे मीढुष्टमाय तवसे वोचेम शन्तमं हृदे सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु, पुरुषो वै रुद्रः सन्महो नमो नमः विश्वं भूतं भवनं चित्रं बहुधा जातं जायमानञ्च यत्, सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु इत्यादिना रुद्रस्य सर्वात्मकत्वं सर्वा-

न्तर्यामित्वं सर्वोत्कृष्टत्वञ्च घटते यत्र सदाशिवब्रह्मपुरुष-साधारणवचनात्मकसूक्तानि वर्त्तन्ते तानि सर्वाणि शिव-पराण्येव। ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोमित्यादिना तस्य सर्वाधिपतित्वनियमात्। रुद्राक्षनामनादिना धर्मादिपुरुषार्थस्य विद्यमानत्वात्। न च रुद्राक्षधारणादिकं मयुक्तमिति भ्रमितव्यम्। कैवल्योपनिषदि हरोपासनामुपदिशति।

हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्।
अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्॥
तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्।
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्॥
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः॥
स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥

इत्यादिकैवल्योपनिषदा हृदयपुण्डरीकान्तर्वर्त्तिनः उमा-सहायस्य त्रिलोचनस्य नीलकण्ठस्य ब्रह्मादिसर्वदेवमयस्य ध्यानात्पुनर्भूतयोनिं गच्छन्ति, मुक्त्यनन्तरं पुनर्योनि-प्राप्तेरभावात्। एवञ्च महादेवस्योत्कृष्टत्वात् उमा-सहायादिलक्षणाश्रितस्य लयस्वामिनो रुद्रस्यैवोपासनया मोक्षः सिद्ध इति फलितार्थः श्रुतिमन्यथाकर्त्तुमशक्य-त्वात्, उपासकस्य विभूत्यादिचिह्नं युक्तमेव। ब्राह्मणे-नावश्यं विभूतिधारणं कर्त्तव्यमिति कालाग्निरुद्रोप-

निषदि समाम्नातम्, अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ धेहि भगवन्! त्रिपुण्ड्रविधिं सत्यत्वं किं यद्द्रव्यं किं यत् स्थानं कति प्रमाणं का रेखाः के मन्त्राः का शक्तिः किं दैवतं कः कर्त्ताः किं फलमिति च तं होवाच भगवान् कालाग्निरुद्रो यद्द्रव्यं तदाग्नेयं भस्म सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्य अग्निरिति भस्म इत्यनेनाभिमन्त्र्य मानस्तोक इति समुद्धृत्य जलेन संमिश्र्य मानो महान्तमित्यालोड्य त्र्यम्बकं त्र्यायुतमिति शिरोललाटवक्षःस्कन्धेषु त्र्यायुधैः त्र्यम्बकैः त्रिशक्तिभिस्तिर्यक्तिस्रो रेखाः प्रकुर्वीत व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति तस्मात् तत् समाचारान्मुमुक्षुः न पुनर्भवाय धन सनत्कुमार प्रमाणस्य त्रिपुण्ड्रधारणस्य त्रिविधा रेखा आललाटादाचक्षुरामूर्ध्नो मध्यतः याऽस्य प्रथमा रेखा सा गार्हपत्यश्चकारो रजो भूर्लोकश्चात्मा क्रियाशक्तिः ऋग्वेदः प्रातः सवनं महेश्वरो देवतेति याऽस्य द्वितीया रेखा सा दक्षिणाग्निः ऋकारः सत्त्वमन्तरीक्षमन्तरात्मेच्छाशक्तिः यजुर्वेदः माध्यन्दिनं सवनं सदाशिवो देवतेति याऽस्य तृतीया रेखा साहवनीयो मकारस्तमो द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवो देवतेति त्रिपुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स समस्तमहापातकोपपातकेभ्यः पूतो भवति स सर्वेषु तीर्थेषु स्नातो भवति स सर्वान् देवान् ध्यातो भवति

स सर्वान् वेदान् अधीतो भवति स सम्यत् सकलरुद्र-
मन्त्रजापी भवति स सकलभोगभुग्देहं त्यक्त्वा शिवसा-
युज्यमाप्नोति न स पुनरावर्त्तते न स पुनरावर्त्तते इति
यः शृणोत्यधीते वा सोऽप्येवमेव भवतीत्यलं सत्यमों
सत्यमित्युपनिषदित्यस्यां कृत्स्नोपनिषदि त्रिपुण्ड्रस्य सर्व-
देववेदकालात्मकत्वं मोक्षप्रदत्वञ्च प्रतिपादितं (सुगमत्वान्न
व्याख्यातं) अतो विभूतिधारणमहिमानं वक्तुं न शक्यते
केनापि, तस्मात् ब्रह्मचर्य्यादिभिराश्रमिभिः सर्वैरपि त्रिपु-
ण्ड्रधारणमेवावश्यं कर्त्तव्यम्। एवं रुद्राक्षलिङ्गधारण-
स्यापि प्रमाणसद्भावोऽस्त्येव।

शीर्षे कण्ठे कर्णयोश्च बाह्वो रुद्राक्षधारणात्।
नीलकण्ठो भवेन्मर्त्यो ब्राह्मणश्चेत् परात्परः॥

इति ब्रह्माण्डसंहितायामुक्तम्। अतप्ततनूर्न तदा मोक्षं
अश्नुत इत्यादिप्रमाणेन तप्तमनोरिव फलश्रवणाल्लिङ्गाङ्कन-
मवश्यं कर्त्तव्यमिति प्राप्ते श्रीशङ्कराचार्य्यैरिदमुच्यते, तप्त-
लिङ्गादिधारणं द्विजातिभिर्न कर्त्तव्यम्, प्रमाणाभावात्,
अतप्ततनूरित्यादिश्रुतेरर्थस्तावदेवं वक्तव्यं नाग्निना तापो
विवक्षितः किन्तु तपसैव, ब्राह्मणस्य तपः कृच्छ्रचान्द्राय-
णादिकं तादृशेन तपसा तापो निर्दिष्टः कृच्छ्रचान्द्रायणैः
कृश इति उक्तत्वात् आर्षविरोधाच्च। तदुक्तं बृहन्नारदीये।

लिङ्गाङ्किततनुं दृष्ट्वा राजन्! चक्राङ्कितन्तथा।
स्नानमेव तदा कार्य्यमथवा सूर्य्यमीक्षयेत्॥
पतितं तप्तलिङ्गाद्यं चक्राङ्कितमथापि वा।

वाङ्मात्रेणापि नार्चेत पाषण्डाचारतत्परम् ॥
शूद्रवत्स परित्याज्यो जीवन्नेवसमाकृतिः ।
तस्मै दत्तञ्च हव्यञ्च कव्यञ्चापि वृथा भवेत् ॥
तद्दर्शनात् परित्याज्यमन्नं मन्त्राभिमन्त्रितम् ।
अपि शूद्रेणचाश्नुवीत् लिङ्गचक्राङ्कितं विना ॥
अपि चेन्निगमाचाररतो वेदान्ततत्परः ।
लिङ्गचक्राङ्गमात्रेण स सद्यः पतितो भवेत् ॥

मार्कण्डेय पुराणे ।

ब्राह्मणानाञ्च गायत्र्याः संवादोऽभूत्महान् पुरा ।
अतस्तयाऽतिसंक्रुद्धाः पाषण्डार्चिताद्देवताः ॥
वेदोक्तकर्महीनाश्च तान्त्रिकाचारतत्पराः ।
यूयं कलौ भवन्त्वेवमिति तानाह सा रुषा ॥
अतः कलियुगे प्राप्ते भविष्यन्ति द्विजाधमाः ।
वेदार्थहीनाः पाषण्डा लिङ्गचक्रादिचिह्निताः ॥
ज्ञानकर्मपथाद्भ्रष्टाः कामक्रोधादिपीड़िताः ।
दुरात्मानः सत्यधर्मवर्जिताः शापयोगिनः ॥
कलौ निंशत्सहस्राब्दे पूर्णे नष्टा भवन्ति ते ॥
निःशेषतां गताः पश्चाद्द्वैतार्थानुचिन्तकाः ।
सत्यधर्मपरा भूयो भविष्यन्ति न संशयः ॥ इति

तस्मादद्रूनं न युक्तं । भवदुक्तोपनिषत्तात्पर्यन्तु सत्यज्ञानमनन्तं ब्रह्म यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यादिना तस्य दुराराध्यत्वादुमासहयादिधर्मसंयुतस्य रुद्रस्यैवोपासनयाऽपि मोक्षोऽस्त्येव तस्य परब्रह्मावतारत्वात् तत्प्रीतये विभूतिरुद्राक्षधारणमवश्यं कर्त्तव्यमेव ।

किन्तु लिङ्गनिर्मूलखण्डनमवधारणं निर्मूलत्वासाङ्गीकर्त्तव्यमिति सिद्धान्तः।

एवं परिहृतयोः शैवमतैकदेशिनोः पुनरन्यः शाखान्तरेण प्रत्यवतिष्ठते भल्लायगणश्च इति। तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यय रजताऽथ हरिणी ता देवा जेतुं नाशक्नुवन् ता उपसदैव जिगीषं तस्मादाहुः यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति इषुं संस्कृत्य अग्निमनीकं सोमं शल्यं विष्णुं तेजनं तेऽब्रुवन् क इमामासिष्यतीति रुद्र इत्यब्रुवन् रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्रवीत् वरं वृणै अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिस्तां रुद्रो वासृजत् तिस्रः पुरः भित्त्वा एभ्यो लोकेभ्योऽसुरान् प्राणुदत यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै नान्यामाहुतिं पुरस्ताज्जुहुयादिति। पुरा राक्षसानां मध्ये तिस्रः पुर आसन् अयोमयं रजतमयं हिरण्मयञ्च पुरमाश्रितान् त्रीन् राक्षसान् जेतुं देवा अप्यसमर्था बभूवुः, ततस्ते देवा इषुं संस्कुर्वन्तः कल्पयामासुः त्रिदेवात्मिकामिषुं संस्कुर्वन्तः मूले अग्निदेवात्मिकां मध्ये चन्द्रदेवात्मिकां अग्रे विष्णुदेवात्मिकामित्यर्थः, ततस्ते देवा अब्रुवन् क इमामासिष्यति क एनान्धारयति यतो अग्नीषोमविष्णुतेजःकूटात्मकत्वेनात्यन्तभारत्वात् जगत्त्रयतेजोरूपत्वाच्च। एतादृक् पुरुषः स्वहस्तेन धृत्वा को वा प्रयुनक्तीति विचार्य रुद्र इत्येवमब्रुवन् यतो रुद्रः क्रूरः किल नै अत एनां धर्त्तुं स एव समर्थः, यतो रुद्रस्याग्न्यादितेजः सर्वं स्वकीयमेतत्। कथमित्युक्ते तावदग्निचन्द्रौ भगवतो नेत्रे

विष्णुस्तु तदीयदेहात्मालिकांशात्मभूत: अत: स्वतेजस्तस्य भारो न भवतीति रुद्रं प्रार्थयामासु:। सोऽब्रवीदहं वरं वृणे भवन्त: ब्रह्मादिभ्यो वरमिच्छामीत्यर्थ: किमिति अहमेव पशूनामधिपति: प्रधान इति, एवं रुद्रेणोक्ता अब्रुवन् तस्माद्रुद्र: पशूनामधिपति: प्रधान इति रुद्रेणोक्ता अब्रुवन् तस्मात् रुद्र: पशूनामधिपतिरिति वयं ब्रह्मादय: सर्वे देवा: पशव: अस्माकं त्वमेक एव पतिरित्युक्ता तदीयलिङ्गत्रिशूलादिचिह्नानि सर्वे धारयामासु:। पशूनां ब्रह्मादीनां पति: स्वामी पशुपति: तस्मै नमो नम इति नमकेऽपि प्रतिपादितत्वात्। तस्मात् ब्रह्मनारायणादिभि: सर्वैरुपास्य: स्वामीत्यर्थ:। अत: सर्वे देवा लिङ्गत्रिशूलमुद्राधारिण: विभूतिरुद्राक्षालङ्कृतदेहिन: शुद्धस्फटिकाक्षमालिकाबद्धकरा: पञ्चाक्षरीमन्त्रराजोच्चारणचलदधरोष्ठा: ईषन्नमितशिरस्का: परमेश्वरपादारविन्दयुगलं निजकिरीटैरर्चयन्त: भक्ताग्रगण्या बभूवु:। अतो निजलिङ्गत्रिशूलविभूतिरुद्राक्षधारणपरान् ब्रह्मादीन् प्रमथोत्कृष्टभक्तान्दृष्ट्वा तद्रक्षणाय पुरभिन्नणाय च मेरुगिरिं धनु: व्यामहिराजं भूमिं रथं चन्द्रसूर्यात्मकं चक्रद्वयं वेदानश्वान् ब्रह्माणं सारथिञ्च कृत्वा वन्द्यादिभिरिव देवै: संस्तूयमान: परमेश्वर: (इत्यादि पुष्पदन्तोक्तप्रकारेण) तामिषुमसृजत पुरोपरि मुमोच येषु: पुराणि छित्वा मृत्युञ्जयस्य निषङ्गान्तरं प्राप तस्मात् पुरहरस्य लिङ्गादिचिह्नानि देवैरपि धृतानि तेषां मुख्यतया शिवभक्तत्वात् पशुत्वाच्च पशुपतिचिह्नधारणं युक्तमेव लोके सेव्यसेवकयोस्तथादर्शनाच्च तस्मात् शिवभक्तै-

रक्षाभिश्च तदङ्कधारणमवश्यमङ्गीकर्त्तव्यमेवेति प्राप्ते श्राङ्कराचार्य्याः, त्रिपुरसंहारकाले रुद्रभक्तानामपि देवानां लिङ्गाद्यङ्कनमनुपपन्नं कुतस्तथाविधप्रमाणाभावात् नारदादिमुनिषु च विभूतिरुद्राक्षस्फटिकधारणे विद्यमानेऽपि लिङ्गाङ्कनाभाव एव, तस्मादेव मुन्यादिषु कदाऽपि तप्तत्रिशूललिङ्गादिचिह्नं न विद्यते "श्रद्धाभक्तिध्यानयोगादवेहि" इति कैवल्योपनिषद्वचनाल्लिङ्गाद्यङ्कनस्य ज्ञानाङ्गत्वाभावात्। नान्यः पन्था विद्यतेऽयनाय इति मन्त्रवेदमवाप्नव्यमित्यादिश्रुतेश्च मोक्षस्य ज्ञानसाध्यत्वमुपपन्नं तस्माच्चित्तनैर्मल्यान्तःकरणप्राप्तस्य मोक्षस्य वह्नितापेन प्रयोजनाभावात् तप्तलिङ्गादेर्निन्द्यादर्शनाच्च लिङ्गाङ्कनमयुक्तमेवेति सिद्धम्। भवत्वतेऽपि देवाग्रगण्यस्य शिवस्य च अङ्गाङ्गिभावत्वेन तत्रापि तदङ्कनं व्यर्थमेव तयोर्भेदाभावात्, यदि राजाङ्कनं भृत्यस्येत्युक्तं तदप्यसत्यं राज्ञः एकच्छत्रादिचिह्नं वर्त्तते तद्भृत्यस्य नास्त्येव। त्रिशूलाद्यायुधविशेषं देवो विभर्त्ति भक्तेनापि तदायुधधारणं कर्त्तव्यमिति किल भवद्भिरुक्तं, तथा चेदयोमयं त्रिशूलादिकं धारयतां भारमात्रमेव प्रयोजनं नत्वन्यत् नास्त्येव तथाविधकार्य्यकारणतायाम्। किञ्च नीलकण्ठभुजगभूषणादिचिह्नं देव[illegible] तदपि धारयं वृश्चिकादिविषमात्रेण म्रियमाणस्य [illegible] न कालकूटभक्षणे शक्तिरस्ति रज्जुदर्शनेन सर्पभ्रा[illegible]मानस्य भुजगभूषणता कथं युज्यते। तस्मात् [illegible] विहाय लिङ्गाद्यङ्कनं परित्यज्य वेदोक्तकर्म्मसमर्पण[illegible] भ[illegible]वति ज्ञात्वा जीवेश्वयोरैक्यानुसन्धानं कुर्वन् वर्त्तयन् [illegible]ज्ञाने जन्ममरण-

प्रवाहकारणमूलाज्ञाननिवृत्तौ जातायां लिङ्गशरीरभङ्गद्वारा मुक्तो भवसीति परमाज्ञापितः भक्ताग्रगण्यस्तदनुसारिणश्च परमतकालानलादयः परमगुरुं श्रीशङ्कराचार्य्यं नत्वा स्वबन्धुपुत्रमित्रादिभिः सह त्यक्तलिङ्गाङ्काः सम्यगुपदिष्टशुद्धाद्वैतवादिनो बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ शिवमतैकदेशनिबर्हणं नाम पञ्चमं प्रकरणम् ।

---

## षष्ठं प्रकरणम् ।

---

तस्मादनन्तशयनं नाम भगवदर्चामूर्त्तिसन्निहितप्रदेशं संप्राप्तः तद्देवदर्शनं कृत्वा निजशिष्यैर्मासपर्य्यन्तमास तत्र,

भक्ता भागवताश्चैव वैष्णवाः पाञ्चरात्रिणः ।
वैखानसाः कर्म्महीनाः षड्विधा वैष्णवा मताः ॥
क्रियाज्ञानविभेदेन त एव द्वादशाभवन् ।
तानाह शङ्कराचार्य्यः किं वो लक्षणमुच्यताम् ॥

आदौ भक्ता इदमूचुः । स्वामिन् ! वासुदेवः परमपुरुषः सर्वदा जगदवनपरः सर्वज्ञः सर्वदेहकारणः स एव रामकृष्णाद्यवतारविभेदेन भूभारं निवर्त्तयितुं शिष्टावनमशिष्टसंहारं च कुर्वन् पुण्यस्थलेषु निजाविर्भूतमूर्त्तिप्रतिष्ठामोचकार । मूढा वयं किल तदीयपादपङ्कजसेवया विगतपापास्तल्लोकवासं प्राप्स्याम इति निश्चयबुद्ध्या कोऽपि न्यमुनेः प्रसन्नो विष्णुरनन्तनाम्ना किलात्रैव वर्त्तते, तदीय-

चरणसेवनमनुदिनं कृत्वा तीर्थप्रसादादिभिस्तृप्तिमेत्य गोपुर प्राकारादिषु सम्मार्ज्जनप्रोक्षणादिकं कुर्वन्तः सन्तोवसामः ।

अङ्केन रहितानेतान् स्मार्त्तवंशसमुद्भवान् ।
ऊर्द्धपुण्ड्रपरान् भक्तानानन्ताङ्घ्रिद्वये नयेत् ॥
ज्ञानमूलमिदं ब्राह्ममित्याद्याङ्गिकचोदिता ॥

नित्यकर्म्मण्यप्रामाण्यमिव प्रतिफलति वः किं प्रामाण्यमिति यतिवर्य्य मदीयाचारो द्विविधः ज्ञानक्रियाभेदात् ज्ञानिनो वयं विष्णुशर्म्मादयः परे कर्म्मठाः ब्रह्मगुप्तादयः श्रीमदनन्तभक्ताः अत्रैव वर्त्तन्त इति विष्णुशर्म्मवचनं निशम्य शङ्कराचार्य्यस्तमपृच्छत् भवत्प्रमुखा ज्ञानिनः किल ज्ञानस्य किंवा लक्षणं तेन फलमपि किमित्युक्ते विष्णुशर्म्मा-ह, श्रीमदनन्तभगवत्पादकमलमेव शरणमिति तूष्णीमवस्थितिरेव ज्ञानं तदनुज्ञां विना तृणचलनमपि न भवतीति, तमाचार्य्योऽब्रवीत् मूढ ! विष्णुशर्म्मन् ।

"जन्मना जायते शूद्रः कर्म्मणा जायते द्विजः ।"

इत्याश्रमधर्म्मानुकूलं कर्म्म सर्व्वेषामलङ्घ्यं तस्यैव तपःशब्दवाच्यत्वात्, सन्यासिनामपि विहितं कर्म्म कर्त्तव्यमेव "कर्म्महीने तु पातित्यमिति दर्शनात्, "अहरहः सन्ध्यामुपासीत, उदिते सूर्य्ये प्रातर्जुहोति, उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सद्ब्रह्माप्येति य एवं वेद"इति च, सर्व्वे वेदा ब्राह्मणोचितं नित्यकर्म्म प्रशंसन्ति श्रौतस्मार्त्तादिकं, यतः कर्म्मार्थमेव श्रुतिप्रवृत्तिः, अतः सर्व्वैराश्रमिभिः वेदोक्तं कर्म्म अवश्य कर्त्तव्यमेव ।

जीवन् कर्मपरित्यागं यः करोति नराधमः ।
स मूढो नरकं याति यावदाभूतसंप्लवम् ॥

इति मनुवचनदर्शनात् देवार्चनस्नानभिक्षाचर्य्यादिकं कर्म यतीनाञ्च विद्यत एव । शौचाचमनस्नानसन्ध्यावन्दनजपाग्निहोत्रस्वाध्यायमाध्याह्निकदेवातिथिपूजादिकं कर्म वानप्रस्थगृहस्थयोस्तुल्यमेव, वनस्थस्यायान् किल विशेषः,तपो ध्यानमननात्परमिति, ब्रह्मचारिणस्तु स्नानसन्ध्यास्वाध्यायेश्वरपूजागुरुकुलवासादिकं कर्म उचितं अतः स्वकर्मभ्रष्टानां भवतां प्रायश्चित्ताग्निप्रसक्तिः स्यात् । किञ्च ध्यानमार्गवर्त्तिनो वयमिति भवद्भिरुक्तं तथाप्यधिकारी नास्त्येव, यद्यस्ति तर्हि सदसच्चक्षणं ब्रह्मनाडीविभेदनं चित्परामर्शभावं षट्चक्रमार्गं दर्शयध्वं, एवमाचार्यैरुक्ते विष्णुशर्मादयः इदमूचुः, यतिनाथ ! अथ कर्म ध्यानं चोभयमेवास्माभिर्विदितं त्रिकालमनन्तदेवपाददर्शनं विना न किञ्चिदिति, तद्वचः श्रुत्वा सम्भूताश्चर्य्यः श्रीशङ्कराचार्य्य इदमाह, विष्णुशर्मन् ! कतिपयैरब्दैरेवं स्थितिः। स त्वाह, मत्सदृशः सप्तमः पुरुषः तत्पिता किञ्चित्कर्मशील इति वार्त्तं मया श्रुतम् । तन्निशम्य कोपाश्चर्य्याभयाक्रान्तमानसः सकलगुरुराट् हे व्रात्य सकलधर्मवहिष्कृत ! दूराद्गच्छेति त्वत्संसर्गेणास्माकं दोषो भवेदिति विष्णुशर्माणमवादीत् । स तु क्लेशपूरितमानसः सगणः समस्तापराधं क्षमस्वेति दण्डवत् प्रणम्य सम्पुटितकरद्वयः स्थाणुवत्समातिष्ठत । विष्णुशर्माभिधमेनं शरणागतं दुर्मार्गाद्रक्षामो वयमिति धिया सगणस्य तस्य प्रायश्चित्तकरणे हस्तामलकादीन्निजशिष्यानाज्ञापयामास ।

ते विष्णुशर्मप्रमुखाणां स्नानब्रह्मदण्डसमर्पणमुण्डनसहस्र-घटस्नानघृतप्राजापत्यब्रह्मकूर्चप्राश्योर्द्दीष्याङ्गगोदानभूशयनगो-गर्भजननजातकर्मनामकरण-चौडोपनयन विवाह-प्रमुखक-र्माणि यथाविधि समाचरन्त। विष्णुशर्मादयोऽपि विहित-ब्राह्मणानुष्ठानतत्पराः श्रीपरमगुरुमिदमूचुः। स्वामिन्! भवत्कृपया ब्राह्मण्यसिद्धिरासीत्। मोक्षसिद्धिः केनोपायेन नो भविष्यतीति जल्पन्तं विष्णुशर्माणमिदमब्रवीत्।

ब्राह्मणाचारदेवाः स्युरीशो विष्णुर्दिनेश्वरः।
उमा गणपतिश्चैव तेषां पूजापरा नराः॥
ब्रह्मार्पणधिया कामान् परित्यज्याचरन्ति ते।
एवं कृते नित्यकर्मण्यमले मनसि प्रभो!॥
जीवस्य च भिदाभावो भवत्येव न संशयः।
मूलाज्ञानस्य तत्त्वस्य निवृत्तिर्ज्ञानकारणम्॥
तेन भग्ने लिङ्गदेहे मुक्तिर्भवति नान्यथा।
इत्यादिष्टो विष्णुशर्मा दण्डवत् प्रणिपत्य तम्॥
सगणः कारयामास नित्यकर्म गुरुं स्मरन्।
स्मार्त्ताचारपरिश्रान्तः पञ्चपूजाविशारदः॥
त्रिपुण्ड्रं भस्मना कुर्वन् चन्दनेन च सुव्रतः।
स्नात्वा मृत्तिकया चोर्द्ध्वपुण्ड्रं कुर्वन् प्रयत्नतः॥

एवं निराकृतेषु विष्णुशर्मादिभक्तेषु तदन्ये कर्माश्रित-भक्ताः ब्रह्मगुप्तादयः समागत्य मुनीन्द्रमिदमूचुः। स्वामिन्! स्मार्त्तमार्गेण स्नानादिकर्म्म कुर्वन्तो वयमपि कर्म्मफलं भगवत्पादार्पणं कृत्वा निवसामः, इति ब्रह्मगुप्तकृष्ण-दासकमलाभक्तादिभिर्विज्ञापितः श्रीशङ्कराचार्य्यः तान्

प्रहृष्टचित्तमुवाच इतः परं पञ्चपूजाफलपरिलब्धचित्त-शुद्धयः शुद्धाद्वैतविद्यावैमल्यनिराकृतमायारचितभेदवासनाः यूयं स्वात्मानन्दानुभवत्यक्तलिङ्गशरीराः सच्चिदानन्दैक्य-फलमनुभविष्यथेति गुरुवाक्यं श्रुत्वा नत्वा स्वस्था बभूवुः। एवं भक्तमते निराकृते भागवतमतावलम्बी कश्चिद्विप्र-देवः प्रत्यवतिष्ठते मन्त्रवर्णात्।

सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत् फलम्।
तत् फलं समवाप्नोति स्तुत्वा देवं जनार्दनम्॥

अनेन मन्त्रेण जगत्पतिस्तोत्रमात्रेणैव वेदपारायण-तीर्थयात्रादिपरिलब्धफलस्य सत्त्वात्। श्रियःपतिकीर्त्तन-मनुदिनमाचरन् वसामि 'कलौ संकीर्त्य केशवम्, इति इति वचनात् मुक्तिः करस्थैव तस्मात्सम्मतस्य निगमोक्त-त्वात् प्रामाण्यं स्मृत्याचारानुकूलत्वात् स्मार्त्तं स्नाना-दिसत्कर्म्म तद्युक्तोऽपि भगवत्सम्बन्धिभागवतः श्रियःपति-कटाक्षादुद्भवं नास्मिन् विचारः कर्त्तव्यः सुवर्णस्य परिमलप्राप्तिरिव सद्ब्राह्मणस्य विष्णुस्तुतिः किल, तस्मात् श्रीमन्नारायणभक्त्या चोर्ध्वपुण्ड्रशङ्खचक्रगदापद्मादिचिह्नि-ततुलसीमालिकाबद्धगलः सार्द्रतुलसिकामुखैः नितरां स्तौमि नारायणमेव शरणमिति वदन्तमाचार्य्योऽब्रवीत्, भागवत! भवन्मतमसमञ्जसं विरोधसद्भावात् कथं चक्रा-चङ्कनस्य निन्दादर्शनात्। किञ्च भगवतो मूर्त्तिश्चतुर्द्धा भवति परव्यूहविभवार्चाभेदात्। परमूर्त्तिः स्वरूपा-भावाल्लिङ्गाभावः आकाशशरीरं ब्रह्मेति यच्छ्रुतं तद् ब्रह्म कं ब्रह्म खं ब्रह्मेत्यादि श्रुतिभ्यः, तद्रूपं वक्तुं

वेदा अपि असमर्था एव यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यादि श्रुतिभ्यः, यतो मनोवागगोचरं ब्रह्मैश्वर्यः, तदेव परमूर्त्तिः । व्यूहमूर्त्तिर्विराट् चतुर्दश-लोकात्मकः तस्य ब्रह्माण्डकर्परपर्य्यन्तमाकाशः शिरः, चन्द्रसूर्य्यौ नेत्रे, प्रागादिदिशः श्रोत्रे, अन्तरीक्षलोको घ्राणम्, मेरुः पृष्ठवंशः, शिखरत्रयं भुजकण्ठाः, अन्यान्य-पर्व्वताः पृष्ठपार्श्वस्थानि, उपपर्व्वताः प्रत्यङ्गानि, समुद्रा रक्तं, लता स्नायूनि, तृणवृक्षाः रोमाणि, भूमिः कुक्षिः, ग्रीवा वलयः, भूरेखा रोमराजिः, भू-मध्यप्रदेशो वस्तिः, शेषः शिश्नं, छिन्दिनीपङ्क्तिर्नित-म्बोरुभागः, अतलादिसप्तकं कटिपादान्तरालः, कूर्म्मः पादौ, एवं वर्त्तमानस्य विराड्देहस्याङ्गेन तप्तमुद्रा-धारणं समर्थयेत् कुत्र । शीर्षादिपादपर्य्यन्तं चिह्नेन केनचिदप्यचिह्नितेन दृढतरेण शरीरमङ्गस्य देहनाशाव्यरं वैष्णवसिद्धिर्भवति । विभवमूर्त्तयः मत्स्याद्याः चेतने मत्स्याद्यवतारात्मके नारायणे विद्यमाने अचेतनया शङ्खचक्रयोश्चिह्नं किमर्थं कर्त्तव्यम् । चेतनपरित्यागे अचे-तनपरिग्रहणे मानाभावाद्दोषबाहुल्यस्य दृष्टत्वाद्दोषे त्वत्वाच्च । अपि लोहमये आयुधरूपे शङ्खचक्रगदापद्म-सहिते विहाय लोहमयान्येव मत्स्याद्याकाराणि कृत्वा तैरेवचिह्नधारणं कृत येन चर्म्मदग्धमात्रं फलमस्ति । तथा कृतश्चेत् प्राणा न स्थीयन्त इति इति चेत् चक्रादि लोहमयं कृत्वा विष्णुमिव हस्ताभ्यां धारय बाहुभार-मात्रं फलमस्ति । अर्च्चामूर्त्तीनां शिलामयत्वात् तद्रूपेण

तत्तेन वा सङ्गच्छ। तस्मान्मूढ भगवच्चिह्नधारणं कर्त्तव्यमिति पापण्डबुद्धिं त्यक्त्वा स्वकर्म्म नित्यादि यथाशास्त्रं ज्ञात्वा तत् फलसमर्पणं भगवत्येव विधाय शुद्धाद्वैतवादिनं गुरुमाश्रित्य तदुपदेशवशाद्विनष्टकर्म्मबन्धः मुक्तो भविष्यसि। किञ्च स्तुतिमात्रेणैव मुक्तिः कारयिष्यतीति भवद्भिरुक्तं तदत्यन्तासम्बद्धं ब्रह्मणो वागतीतत्वेन स्तुतेर्वाग्रूपत्वेन मुक्तिः सुतरामयुक्तैव ज्ञानं विना मुक्तिर्नास्त्येव नान्यः पन्था विद्यते अयनायेति निषेधदर्शनात्। यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते यन्मनसा न मनुते येनाहुर्मनोमतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इत्यादि श्रुतिभ्यः ब्रह्मणो वाङ्मनोऽतीतत्वात् ईदृक् स्वरूपं ब्रह्मेति वक्तुमशक्यत्वात् तदीयध्यानादिकं सर्वदा अनुपपन्नम्। जन्मान्तरसञ्चिताभ्यासपरिपक्वबुद्धेः कस्यचित् गुरूपदेशवशात् अवगत ब्रह्मतत्त्वस्य मुक्तिर्भवति आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः, न नरेणावरेण प्रोक्त एष सु सुविज्ञेयो बहुधा चिन्त्यमान इत्यादि कठश्रुतिभ्यः। ब्रह्मबोधस्याभ्यासाध्यत्वात् ब्राह्मणेन कर्म्मनिष्ठावता भवितव्यं तदनुष्ठानेन चित्तशुद्धौ जातायां बहुजन्मतपःफलादाविर्भूतब्रह्मस्वरूपप्रपन्नः सन् मुक्तो भवति। उक्तञ्च भगवद्गीतासु।

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते। इति

वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः। इति

यत्र ब्रह्मणि प्रपञ्चदृष्टिर्जायते तदनवगाहज्ञानेन नेदं

जगत् किन्त्वात्मैव जायते तदा स एवाहं भेदाभावो भवत्येव, स एव मुक्तिरिति। एवमुपदेशं कुर्वन्तं परमगुरुं श्रीशङ्कराचार्य्यं विप्रदेवः सम्यगभिवाद्य स्वामिन्! मदीय-मतेनालं तस्य मुक्तिजनकाभावात् तावद्भवत्पाददर्शनं मम सुकृतशतेनैवाभूत्। अतः सदुपदेशेन मां कृतार्थं कुर्विति नमस्कारपुरःसरं विज्ञापितः श्रीपरमगुरुरिदमवादीत्, भो विप्रदेव! चिह्नाङ्कनादिकं परित्यज्य यथाकालोचितं नित्यकर्म्म कुर्वन् सदहं ब्रह्मास्मीति भावय, सिद्धायां भाव-नायां मुक्तो भवसीति।

इत्यनन्तानन्दगिरिकृतौ भागवतमतनिवर्हणं
नाम षष्ठं प्रकरणम्॥

---

## सप्तमं प्रकरणम्।

---

एवं भक्तभागवतमतयोः निराकृतयोः पुनरन्यो वैष्णवः शार्ङ्गपाणिरिति प्रत्यवतिष्ठते मन्त्रवर्णात्।

यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात्।

ॐ नमो नारायणायेति मन्त्रोपासकः स आह। भग-वद्भक्तेन वैकुण्ठलोकवासार्थमवश्यं शङ्खचक्राद्यङ्कनं कर्त्तव्यम्। नारायण मुद्रादिधरः नारायणाष्टाक्षर्य्युच्चारणमात्रेणैव जन्मसंसारबन्धनाद्विमुक्तः वैकुण्ठभवनं गमिष्यति, शङ्खचक्रा-

चक्रितगात्रः वैष्णवोत्तम इति तादृग्विधास्तल्लोकवासिनो मुक्ता इति प्रसिद्धेः। तदुक्तं पुराणादौ।

ये बाहुमूलपरिचिह्नितशङ्खचक्रा
ये कण्ठलग्नतुलसीनलिनाक्षमालाः।
ये वा ललाटफलके लसदूर्द्ध्वपुण्ड्रा-
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति॥ इति

शङ्खचक्राद्यङ्कनस्य पुराणपठितत्वादवश्यं कर्त्तव्यमेव भगवच्चिह्नत्वात्। एवं प्राप्ते शाङ्कराचार्य्याः। मूढ़! तप्त-शङ्खचक्रधारणं परिहर्त्तव्यं कस्मात् तद्बोधकश्रुत्यभावात्। अतप्ततनूर्न तदामो अश्नुत इति श्रुतिस्तत्र प्रमाणमिति-चेन्न। तपस्तप्ततनोरेव ब्रह्मबोधस्याश्च दर्शनात्। भृगुः ब्रह्मबोधार्थं पितरं वरुणमासाद्य यथोचितं नत्वा ब्रह्मो-पदेशं कुर्व्वित्युक्ते तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति किल वरुणेनोक्तम्। तपःशब्दार्थस्तु महापातकध्वंसहेतु-भूतकृच्छ्रचान्द्रायणादिः आश्रमविहितकर्म्मानुष्ठानं वा सकलवेदवचनविदितस्य साक्षिचैतन्यस्य सर्व्वदेवमयस्य ध्यानं वा भविष्यति।

एको देवः सर्व्वभूतेषु गूढ़ः सर्व्वव्यापी सर्व्वभूतान्तरात्मा।
कार्य्याध्यक्षः सर्व्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥
इति।

अतः परमात्मनो रूपगुणकर्म्माभावाच्च तत्स्वरूपज्ञा-नेनैव मुक्तिदर्शनात्, तपोमूलमेव ब्रह्मज्ञानमिति प्राप्तं तस्मात् चक्रादिचिह्नस्यानवकाशः कार्य्यमूर्त्तेर्विष्णोश्चक्रा-द्यायुधस्य विद्यमानत्वात्। तच्चिह्नधारणेन तन्मन्त्रजपेन

च वैकुण्ठप्राप्तिरिति किलोक्तं नहि तदपि रमणीयं मेर्वग्र-शृङ्गेषु त्रिषु वर्त्तमानेषु पश्चिमशृङ्गे रुद्रलोकः मध्यशृङ्गे ब्रह्मलोकः प्राक्शृङ्गे विष्णुलोकः तेषां ब्रह्मावसानलयात्म-कत्वात् तत्प्राप्तिरनर्थैव। तद्द्वारा चक्रादिधारणस्य निर-र्थकत्वं प्राप्तम्। ब्रह्मविदाप्नोति परमिति ब्रह्मविद एव निश्रेयसप्राप्तेः तदन्यत् क्षीणे पुण्ये मर्त्यलोकं विशन्तीति संसारप्राप्तिकरमेवेति सिद्धं पुराणेषु बृहन्नारदीयादिषु तप्तचक्रलिङ्गनिषेधदर्शनात् कर्म्मवाह्यस्य ब्राह्मणव्यतिरि-क्तस्य तच्चिह्नमस्तु तस्याप्यग्रजशुश्रूषयैव मुक्तिदर्शनादप्रयोज-कत्वं चक्राद्यङ्कनस्य प्राप्तम्। विष्णुचिह्नधारणेन विष्णु-समोऽहं भविष्यामीति फलधिया वेदङ्कधारणमात्रेणैव विष्णुत्वप्राप्तिः शूद्रस्य शिखायज्ञोपवीतधारणमात्रेण ब्राह्म-णप्राप्तिरिव भाति ब्रह्मभावनयैव ब्रह्मत्वप्राप्तेः ब्रह्मविद् ब्रह्मैव भवतीति श्रुतेः। किञ्च यों अत्ता चराचरग्रहणा-दित्यस्याधिकरणसूत्रस्य विषयवाक्यमेतत्। यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनं मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति अस्मिन्नधिकरणे मया भाष्ये सिद्धान्त एवं कृतः, अत्ता परमात्मा कस्मात् चराचरग्रहणात् यस्य च ब्रह्म-क्षत्राद्युपलक्षितं जगत् चराचरं ओदनमन्नं मृत्युः सर्वप्राणि प्राणहर्त्ता उपसेचनं उपदंशः इत्थं को वा वेद यत्र यस्मिन् जन्मनीत्यर्थः। वेदितुः फलमाह स एव परमात्मैव भव-तीति तस्मात् ब्रह्मप्राप्तिः निरुपाधिकब्रह्मवेदनेनैव भवति। सर्वेषां देवानामात्मैकायनमिति बृहदारण्यकश्रुतेः। सर्व-देवस्वरूपोपासनमात्मन एवेति चेन्न। कथं कर्म्मातीतब्र-

त्तेरीश्वरस्य कर्म्मगोचरत्वं ब्रह्मलये देवानां पृथक्स्वरूपाभावात् कारणैक्यं सिद्धमेव। अतः एकायनं मुख्यस्थानं। स्रष्टुर्मायान्तर्गतस्य वचनं बहु स्यां प्रजायेयेत्यनेन सर्वदेवमयत्वं प्राप्तं देवानां तदंशसम्भूतत्वात्। अतो यस्य देवस्य उपासनामविच्छिन्नां करोति तल्लोकप्राप्तिमात्रमेव फलं समधिगच्छति पुण्यलये पुनर्मर्त्यलोकप्राप्तेः। तदनन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तप्रश्ननिरूपणाभ्यामित्यस्मिन्नधिकरणे जीवस्य तृणजलौकान्यायेन परलोकगमनमुक्त्वा तत्र स्वकर्म्मसम्पादितफलमनुभूय किञ्चिदवशिष्टे निजकर्म्मणि पुनर्मर्त्यलोकप्राप्तये पञ्चाग्निविद्यामाश्रयति जीवः। स तु द्युपर्जन्यपृथिवीपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीरवलम्ब्य पुरुषाकारो भवतीति अतः संसारमार्गात् दृढतरज्ञानेन विना तप्तचक्रादिधारणेन नष्टो भवतीति अनृतवाद एव, सर्वस्य मायारूपत्वात् अमायिकसदनुसन्धानेनैव तन्निवृत्तिः। अतः सर्वज्ञनित्यशुद्धबुद्धमुक्तस्वरूपं सत्यज्ञानमनन्तमणुमहत्त्वादिलक्षणलक्षितं ब्रह्मास्मीत्यनुसन्धानं सदा कुरु। तदनुसन्धानेन भेदगन्धे निरस्ते जीवस्य परमत्वमेव, उक्तञ्च शिवगीतासु।

शिवः शिवोऽहमस्मीति वादिनं यञ्च कञ्चन।
आत्मना सह तादात्म्यभागिनं कुरुते भृशम्॥ इति

एवमुपदिष्टः शार्ङ्गपाणिवैष्णवः श्रीशङ्कराचार्य्यं परमगुरुं नत्वा स्वामिन्! भवदुपदेशेन कृतार्थोऽस्मि। इतः परं शुद्धाद्वैतवृत्तौ सोऽहंभावनापरिलब्धफलनिरस्तभिदाशङ्कायां निश्चयेन वर्त्तेऽहमिति दण्डवन्ननाम। आचार्य्यस्त्वं मुक्तो

भवेत्यवादीत् । तदनन्तरं निरस्तचिह्नः आर्त्ताचारपरित्यक्तगात्रः पञ्चपूजानैपुण्यप्रसन्नसकलदेवदत्तवरः स्वकुलधर्मदेशस्थानशेषानेवमाचचार ।

इत्यनन्तानन्दगिरिकृतौ वैष्णवमतनिवर्हणं
नाम प्रकरणं सप्तमम् ॥

---

## अष्टमं प्रकरणम् ।

एवं परिहृते वैष्णवमते पुनरन्यः पाञ्चरात्रागमदीक्षितः प्रत्यवतिष्ठते । स तु श्रीमच्छङ्कराचार्यमिदमाह । स्वामिन् ! भवानत्रागत्य भक्तभागवतवैष्णवमतनिरसनं कृत्वा वर्तसे ते वैष्णवाः किमु जातिमात्रोपजीविनः पुण्ड्रादिधारणमात्रेण तद्दीक्षाः तन्मतं भवता निरस्तमेव इदानीमशेषविष्णुविदीक्षाकारणं पाञ्चरात्रं परमवैष्णवमतमहमवलम्ब्य चिरादनन्तदेवपादकमलाराधनं कुर्वन् भगवत्प्रियोऽभवम् । पाञ्चरात्रागमस्य निन्दां कर्त्तुमसमर्थ एव ईश्वरोऽपि अतः भगवदर्चामूर्त्तिप्रतिष्ठादिकमपि तदनुष्ठानमूलकत्वात् कर्त्तव्यम् । तस्मात् ब्राह्मणैः सर्वैरपि पाञ्चरात्रागमाचार एव कार्य्य इति प्राप्ते आचार्य्यैरिदमुच्यते । भो वैष्णव ! समीचीनमुक्तं भवता विचार्य्यतया वेदाविरुद्धत्वमागमेऽस्ति चेत् तदुक्ताचारः परिग्राह्यो भवति यदि विरुद्धस्तदा स एवाचारः परित्याज्यो भवति । प्रथमं विष्णुसम्बन्धी वैष्णवः विष्ण्वेकदेवतानिरत इत्यर्थः । तादृग्विधस्य वैष्णवस्य

विष्णुमन्त्रशतोपदेशेनापि न ब्राह्मण्यभावः स्यात्। किन्तु गायत्र्युपदेशेनैव ब्राह्मण्यसिद्धिर्भवतीति। अतो मन्त्रान्तरपरिग्रहस्य दुर्निवार्य्यत्वात् ब्राह्मण्यानुग्रहाय गायत्र्यङ्गीकारः कर्त्तव्य आसीत् गायत्र्यङ्गीकारोऽपि माऽभूदिति यद्युच्यते तर्हि गायत्र्यभावे पतित एव स्यात्। तस्मान्मन्त्रान्तरसद्भावात् वैष्णवत्वहानिः स्यात्। किञ्चैवमेव रविरग्निश्च सेवनीयः तयोरपि ब्राह्मणकर्म्माधारत्वात्, तस्मादपरिहार्य्येषु देवतान्तरेषु सद्भावात् तत्परित्यागी ब्राह्मण्यविच्छित्तिदर्शनात् वैष्णवमतमनृततरमित्युक्ते स त्वब्रवीत्। भवदुक्तमसमञ्जसं कथं गायत्र्या अपि विष्णुशक्तित्वात्। तदपि कथं शङ्खचक्रधारणस्य विद्यमानत्वाच्च यत्र विष्णुचिह्नधारणत्वं युज्यते तत्र तत्र तद्रूपत्वं प्राप्यते इति तर्हि रुद्रशक्तिरेवेति वक्तव्या, कथं पञ्चवदनेन्दुशेखरत्वाद्युपमानाद्रुद्रस्य प्रागादिमुखसद्भावो यथा तथैव गायत्र्या अपि चन्द्रमुकुटत्वं रुद्रस्यासाधारणो धर्म्मः। तद्वदस्यास्त्यतः गायत्री रुद्रशक्तिरेवेत्यविरुद्धम्। किञ्च शरीरापेक्षया आयुधानां भिन्नत्वात् पञ्चवक्त्रसद्भावात् रुद्रशक्तिरस्तु वा न वेति सन्देहलेशाभावात् परमेश्वर्य्येव गायत्रीति निरवद्यम्। स्वामिन्! गायत्रीशब्दार्थस्तु न परमेश्वरीं रुद्रशक्तिं वक्ति किन्तु सवितुर्देवस्य वरेण्यं श्रेष्ठं भर्गः तेजः धीमहीत्यादिना सूर्य्यतेजःप्राधान्यात् तन्मण्डलालयस्य नारायणस्यैवेयं शक्तिरिति रोचते तस्या बहुरूपसद्भावात् पञ्चमुखादिकमविरुद्धम्। ननु अष्टमूर्त्तेः परमेश्वरस्यैव शक्तिरीदृशी कथं सूर्य्यस्य तन्मूर्त्तित्वात् अतो रुद्रमूर्त्तिप्रतिपादिता गायत्री

विष्णुरग्निरिति वक्तुं नार्हसि गायत्रीहृदये गायत्र्युत्पत्ति-प्रकारोऽपि नितरां प्रतिपादितस्तद्द्वारा प्रणवात् व्याहृत्युत्पत्तिः व्याहृतीभ्यः गायत्र्युत्पत्तिः गायत्र्याः सावित्र्युत्पत्तिः सावित्र्याः सरस्वत्युत्पत्तिः सरस्वत्या वेदोत्पत्तिः वेदेभ्यः ब्रह्मोत्पत्तिः ब्रह्मणो लोकोत्पत्तिः एवं स्थिते प्रकृतिकार्य्ये किं चिन्त्यम्। एतत् सर्वस्यापि प्रणवजन्यत्वं सिद्धं भवति। प्रणवस्य तु ओमित्येतदग्रे अजायतेति जन्यत्वं दर्शयति श्रुतिः। प्रणवं प्रथमं परमेश्वरादजायतेति भाष्येऽप्युक्तम्। परस्तादात्मन एव प्रणवोत्पत्तिः सिद्धैव।

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥ इति।

नारायणोपनिषद् वचनान्महेश्वरस्य जगत्कारणत्वाच्च। तस्मादेव गायत्री जाता जगदुत्पत्तिहेतवे। स्वमाया-प्रविष्टस्य तस्य पञ्चवक्त्रचन्द्रमुकुटविशेषणस्य शक्तिरेव गायत्रीति समाधानं बृहदारण्यके अन्तर्यामिब्राह्मणे, य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त अन्तर्याम्यमृत इति। यस्य परमात्मनः आदित्यः शरीरं भवति अष्टमूर्त्यन्तःपातित्वेनादित्यः शिवस्य शरीरमेव। एवञ्चादित्य-शरीरस्य ईशानस्य तेजोरूपा गायत्री तस्याः पञ्चवक्त्रचन्द्रचूड़त्वाद्युपपन्नम्। अतः चक्रस्यायुधविशेषत्वात् रुद्रस्याप्युपपन्नमेव। तस्माद्देवतान्तरत्वान्नैव गायत्र्युपासनीया वैष्णवेन। तथैवाग्निरपि परित्याज्यः तस्य रुद्रत्वात् अष्टमूर्त्यन्तःपातित्वात् यो रुद्रो अग्नौ योऽप्सु य ओषधिषु यो

रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमोऽस्त्विति श्रुतेः । रविस्त्वीशानमूर्त्तिरिति प्रतिपादित एव । तस्मात् गायत्र्याऽभ्युपासनं वैष्णवः कर्त्तुं नार्हसि त्वम् । एवं ब्राह्मण्यनिवृत्तावपि जातायां वैष्णवोऽस्मीति यद्युच्येत तर्हि प्रारब्धस्यातिविचित्रत्वात् को वा भवतामाकल्पतदुपयोगः जातिभ्रंशस्यासमर्थ्यादकत्वात् ज्ञानमतवत् भक्तादिषु नानामतावलम्बिनां नियमातिक्रमप्रवृत्तिमतां यथा जातिभ्रंशस्तथैव इत्यर्थः । तस्मात् ज्ञाने जाते संसारनिवृत्तेरेव फलं लभ्यते नित्य संसारिणामस्माकं ज्ञानमतमिति वदतां जात्याश्रमविहितकर्मभ्रष्टानां किमु वक्तव्यं तद्वदित्यर्थः । नित्यनैमित्तिककर्मपरित्यागे ज्ञानमतावलम्बः तदन्यथानियमात् नितम्बिनीपरिसेवने कस्य मतस्यावलम्बो वाऽस्माभिर्वेदितव्यः श्रुतिस्मृत्युक्तनियमच्छेदिनां ज्ञानकर्ममार्गद्वयभ्रष्टानां मतं किमस्तीति । उक्तञ्च,

जीवन् कर्मपरित्यागं यः करोति नराधमः ।
स मूढो नरके शेते यावदाभूतसंप्लवम् ॥ इत्यादिना ।

एवं वैष्णवमतस्य दौर्बल्ये प्राप्ते माधवाख्यो वैष्णव इदमाह । स्वामिन् ! पाञ्चरात्रागमे तप्तशङ्खचक्रे द्विभुजे धार्य्ये तेन परमं लोकं यातीति सम्यगागमदीक्षितस्य फलं प्रतिपादितम् । वैष्णवस्याप्रामाण्ये आगमस्य सुतरामप्रामाण्यप्रवृत्तिः स्यात् । तस्माद्वैष्णवमतमवश्यमङ्गीकर्त्तव्यमित्यनोच्यते । आगमोक्ततप्तशङ्खचक्रधारणमयुक्तं वेदविरुद्धत्वात् अग्न्याद्युत्पत्तेः पूर्वभाविनो वेदस्य विरुद्धत्वे प्रोच्यमाने महानेव दोषः प्रसज्येत तद्विरुद्धाचारे तदेव सूर्य्यप्रणीतागम-

विरुद्धतापि तत्रैवेति चेन्न आगमेतिहासपुराणोक्ताचारस्तु वेदानुकूलत्वया ग्राह्यः, अग्राह्य एव तत्प्रतिकूलः। उक्तञ्च,

अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि।

श्रुत्युक्ताचारतो ग्राह्या ह्यागमानां प्रसज्यता॥ इति।

अतः सर्वस्यापि वाङ्मयस्य निगममूलत्वेन तद्विरुद्धत्वेन वैष्णवस्याग्राह्यत्वं प्रसक्तं भवति अतः परित्यक्तचक्रादिचिह्नः त्वमद्य प्रतिहतं ब्राह्मणाचारं निर्वर्त्तय यथाशक्तिकर्म्माचरणेनापि प्रत्यवायाभावात्। श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितादित्युक्तेः। तस्मात् ब्राह्मणस्य यथोक्तकर्माचरणमेव तपः। तेन तपसा यस्तप्ततनुर्भवति स एव तप्ततनुः तस्य अतप्ततनोः पुरुषस्य तद्दाम तद्धामेत्यर्थः। तस्य भगवतो धाम तेजः अश्नुते न विद्यते इत्यर्थः। ज्ञानादृते मोक्षो न भवति तस्य मनोनैर्मल्यमूलं निर्मलेन मनसा संसारकारणस्य भेदस्य निवृत्तेः। ततः परमहमस्मि ब्रह्मेति महावाक्यस्य निष्पन्नत्वात् परं मोक्षमाप्नोति इति सिद्धान्तः।

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।

सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना॥ इति श्रुतेः।

एवं भावनया तत्सत्यज्ञानानन्दलक्षणलक्षितं ब्रह्म त्वमसि नतु पाञ्चरात्रागमदीक्षितो माधवः।

यः परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्।

सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्॥ इतिश्रुतेः

तस्मात् मायाकल्पितचक्राद्यङ्कनादिकं परित्यज्य शुद्धाद्वैतवृत्त्या जीवेशैक्यं कुरु मुक्तो भवसीति बोधितः त्यक्तचिह्नः

परिवर्जितागमाचार: सन्मार्गगामी माधव: स्वकुलग्रामदेशवासिभि: सह शुद्धाद्वैतवृत्तिं प्राप्य स्नानसन्ध्याग्निहोत्रस्वाध्यायवैश्वदेवातिथिपूजापरायण: सर्वं जगद्रूपेणावगतं ब्रह्मेति ध्यात्वा तथैवाहमस्मीति मुक्तोऽभवत्।

इत्यनन्तानन्दगिरिकृतौ पाञ्चरात्रागमनिवर्हणं नाम अष्टमं प्रकरणम्।

---

## नवमं प्रकरणम्।

---

एवं परिहृतेषु भक्तभागवतवैष्णवपाञ्चरात्रेषु पुनरन्यो वैखानसमताचार: व्यासं इति प्रत्यवतिष्ठते मन्त्रवर्णात् स्वामिन्! भवता निरस्ता: भक्तादय: चत्वार: तज्ज्ञानमार्गवर्त्तिनश्च इदानीमहमागतोऽस्मि व्यासदास: वैखानसमताचाराग्रणी: न च ब्रह्मापि मत्पक्षं निवारयितुं कुशल: मदीयमतेश्वरस्य नारायणस्य सर्वोत्कृष्टत्वात् शङ्खचक्राद्यङ्कितादुगुरोरुपदिष्टोऽहं विष्णु: सर्वोत्तम इति अस्मन्मतस्य श्रुतिरूढत्वञ्चेति तथा मन्त्रश्च। तद्विष्णो: परमं पदं सदा पश्यन्ति सूरय: दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते। अस्यार्थ:। सूरय: विद्वांस: विष्णो: नारायणस्य तत्प्रसिद्धं परमपदं उत्कृष्टं स्थानं वैकुण्ठाख्यं सदा सार्वकालिकं पश्यन्ति तथाविधस्थानं कदा वयं प्राप्स्याम इति पश्यन्तीत्यर्थ: तत्पदं किं विधं दिवि द्युलोके आततं विस्तृतं चक्षुरिव वर्त्तमानं

चक्षुषोऽधिदैवतं सूर्य्य इव प्रकाशमानमित्यर्थः विप्रासः ब्रा-ह्मणा विगतं मन्यं पापं येषां ते विपन्यवः जागृवांसः वि-गतनिद्राः निद्रालस्यादिनिन्द्यगुणरहिता इत्यर्थः विष्णोः नारायणस्य परमं सर्वापेक्षया पूज्यं पदं स्थानं यदस्ति तत् समिन्धते ध्यायन्तीत्यर्थः। तस्मात् सर्वदेवस्थानापेक्षया विष्णुपदस्य श्रेष्ठत्वात्। अनेन हि नारायणस्य सर्वोत्तमत्वं सिद्धमेव। नारायणाद् ब्रह्मा जायते रुद्रा वसव इत्यादिना नारायणोपनिषदुक्तप्रकारेण सर्वदेवकारणत्वं नारायणे घटते। अन्तर्वहिश्च तत् सर्वं व्याप्य नारायणः स्थित इत्यादिना नारायण एव परं ब्रह्म नराणां समूहो नारं तन्नायनं स्थानं यस्य नारायणः रेफात्पर नकारस्य णत्ववि-धानात् सर्वप्राणिबुद्धिगुहानिवासाच्छुद्धचैतन्यमित्यर्थः। तस्मान्नारायणभक्तानां तदङ्कधारणमुचितमेव। वैखानसो विष्णुभक्तो विरचितोर्द्ध्वपुण्ड्रः शङ्खचक्राभ्यां पवित्रगात्र इति। अतः शङ्खचक्रोर्द्ध्वपुण्ड्राद्यङ्कितः विष्णुभक्त इति प्राप्ते अत्रो-च्यते। भो व्यासदास! भवदुक्तमन्त्रद्वये विष्णुलोकस्य तेजोरू-पत्वं विद्वत्प्राप्यत्वं प्रदर्शितम्। मायातीतस्य परमात्मनः सकाशात् अजा गुणत्रयमयी किल अजायत ततः महत्तत्त्वं तस्मादहङ्कारस्त्रिगुण उत्पन्नः। विष्णुपुराणे।

वैकारिकस्तामसश्च भूतादिश्चैव राजसः।
त्रिविधोऽयमहङ्कारो महत्तत्वादजायत॥

इति वचनबलात् तस्य ब्रह्मविष्णुशिवात्मकत्वं प्राप्तम्। ते सृष्टिस्थितिलयकर्त्तारः तस्मात् पालनकर्त्ता विष्णुरित्यु-च्यते। व्यापकस्य पालकत्वेनैव सिद्धे सर्वभूतवहिरन्तःस्थि-

तत्वेन नारायण इति नाम तस्य प्राप्तम्। अतः पालनकर्त्तुर्विष्णोः पदं स्थानं सदा पश्यन्ति सूरय इत्युक्ते का वा अस्माकं हानिः। पालनकर्त्ता वा परब्रह्म वा विष्णुर्भवतु न चास्माकं तत् क्लेशः सर्वेषां देवानामात्मैकायनमिति वृहदारण्यकश्रुतेः परब्रह्मणः सर्वदेवमयत्वात् तस्मादोँङ्कार उत्पन्नो गुणत्रयसमात्मतिरिति। स मायायतन एव। उत्पन्नस्य प्रणवस्यार्थाः अकारोकारमकाराः परो विन्दुः तस्मात् मकारः तस्मादुकारः तस्मादकार इति प्रवृत्तिक्रमः निवृत्तिक्रमस्तु अकार उकारे लीयते उकारस्तु मकारे मकारो विन्दौ विन्दुरजायां सा परब्रह्मणि इति व्यवस्थितिः। एवम्भूतप्रणवोऽथ रुद्रविष्णुब्रह्माणः लयस्थितिसृष्टिकर्त्तारः तेषां मेरुशिखरेषु लोका वर्त्तन्ते ते तु तत्तदुपासकानां प्राप्याः सगुणत्वादनित्यत्वाच्च यः सोऽहं ब्रह्मास्मीत्यात्मानमद्वितीयं वेद तस्य पुनः संसारप्राप्तिर्नेति किल सिद्धान्तः। भवान् विष्णुभक्तः तत्प्रीत्यै नित्यकर्म्म कुरु ब्राह्मणानां कर्म्मप्राधान्यात्, नहि तप्तचक्रादिधारणं कुरु तत्र प्रमाणाभावात्। आगम एव मानमिति यद्युच्यते तथा न वक्तव्यम्। आगमस्य खण्डद्वयात्मकत्वात् ग्राह्यखण्डोऽग्राह्यखण्डश्चेति। को वा ग्राह्यखण्डः निगमानुकूलखण्डस्तावत् ग्राह्यः। अग्राह्यस्तद्विरुद्धः। विरुद्धोऽप्यागमस्य प्रामाण्यादग्राह्य इति यद्युच्यते तर्हि ब्राह्मणहानिः स्यात् न सुरां पिबेत् न कलञ्जं भक्षयेत् न परदारान् गच्छेत् नात्मानमुद्वासयेदित्यादिनिगमनिषेधेषु आगमग्राह्यत्वस्याचारोपदेशे वर्त्तते निगमविरोधोऽप्यस्तु आगमबलात्तदाचार-

निष्ठां करोति यदि तत्प्रतिग्राही भवति तदा स पतितो भवति, तस्मान्निगमसूत्रच्छेदिनो गतिरिहामुत्रापि न विद्यते अतस्तप्तचक्रादिधारणं न युक्तमिति एवमाचार्य्यैः प्रतिपादिते व्यासदास इदमुवाच स्वामिन्! यथागमाचारः प्रमाणं पूर्व्वस्मिन् युगे दत्तात्रेयः परमयोगविदपि पञ्चमुद्रामुदितः कथमासीत् तस्मात् महद्भिः परिगृहीतो मार्गः शङ्खचक्रादिधारणपरः स्वीकर्त्तव्य एव किञ्च पुराणेषु च दर्शनात्। यत्र यत्र वैष्णवधर्म्मा उक्ताः तत्र तत्र चक्राद्यङ्कनं पुरःसरमेव वर्त्तते तद्द्वाराऽपि तदङ्गीकारः सिद्ध इति भगवच्चिह्नाभावे वैष्णवत्वहानेः। तस्मात् भगवच्चिह्नधारणमवश्यं कर्त्तव्यमिति पूर्वपक्षे प्राप्ते तत्राचार्य्यैरिदमुच्यते। व्यासदास भवदविवेकः किमु वक्तव्यः, मुद्राङ्किततनुः दत्तात्रेय इति केन श्रुतं, तस्य मुद्राङ्कने किमु प्रयोजनं परमयोगविदस्तस्य भूतजयवृत्तिनिष्ठस्य नियमाभावात् स्वगात्रनिष्ठपञ्चीकृतपञ्चभूतानि अपञ्चीकृतभूतेषु संयोज्यते कस्मिंश्चिच्चित्ते अहममवस्य इत्युत्तरं जल्पं नास्ति तस्य महायोगिनः वहिरङ्गेन किं प्रयोजनमस्ति बाला अपि जानन्ति। किञ्च सर्वभूतानि स्वान्तः सर्वभूतान्तः स्वं च ध्यायतः जीवन्मुक्तस्य दत्तात्रेयस्य किमङ्केन प्रयोजनम्। किञ्च स्वाविर्भूत कालादेकादशाब्दमितं ब्रह्मादीनां सम्पाद्य द्वादशदलपद्मदललिखितवीजमन्त्रार्थादिविदितमृत्युनिवर्हणहेतुकालसङ्कर्षणीविद्याकोविदस्य परमयोगिनः किं वहिरङ्गेन। किञ्च कचपुटिमन्त्रराजविदितसकलजगन्नाथस्य वहिःप्रप-

ह्नेन मायाकृतचिह्नेन न हि किञ्चित्। अष्टभूतसम्पन्नस्य सर्वदेवपूज्यस्य किं बहिरङ्गेन, तस्माच्चक्राङ्कनमवश्यं कार्य-मिति मन्दबुद्धिं दुराचारमूढतां परित्यज्य विगतचिह्नः सुखेन वर्त्तय। पुराणेषु भगवद्भक्तानां भगवच्चिह्नधारणं श्रुत-मित्युक्तं न हि तदप्ययुक्तम्। कथं को वा प्रह्लादस्य चक्राङ्कनं कारयामास नृसिंहाविर्भावमूलत्वात् विष्णुभक्तिरस्तीति किमु वक्तव्यम्। गजेन्द्रः केन चक्राङ्कितः तस्यार्त्तिपरिहा-राय चक्रहस्तो विष्णुः कथमागतः। विभीषणस्य को वा बहिश्चिह्नमाचकार रामः शाश्वतलङ्काधिपत्यं कथमदात्। ध्रुवः केन लिङ्गभृत् तस्य ब्रह्मालयपर्य्यन्ते स्थितिः कथमभ-सीत्। द्रौपदी केन चिह्नेनाङ्किता तस्याः स्मरणमात्रेण वस्त्रचयदाताऽभूत्। अतो व्यासदास! मूढबुद्धिं परित्यज्य बहिर्लिङ्गं त्यक्त्वा चर्म्मविकारसाधनं सोऽहंभावेन त्यक्तभेदा-दिकल्मषः परमोत्तममवाप्स्यसीति भगवच्चिह्नं धारणीयमि-त्युक्तं सत्यं भगवद्देहनिष्ठं चिह्नं वा उत भगवद्धृतचिह्नं वा नाद्यः भगवद्देहे वक्षःस्थले लक्ष्मीकौस्तुभचिह्नं उदरे चतु-र्दशभुवनचिह्नं पादादिनाभिपर्य्यन्तमधोलोकचिह्नमत ऊर्द्ध-मूर्द्धचिह्नमक्ष्णोः सूर्य्यचन्द्रचिह्नं जिह्वायामनन्तवेदचिह्नं एवमनेकचिह्नानि भगवद्देहे वर्त्तन्ते समर्थश्चेत् तच्चिह्नाव-लम्बनं कुरु। यस्य कस्यापि मनुष्यस्य भगवद्देहचिह्ना-सम्भवात् प्रथमपक्षो दूषितः। न द्वितीयः। भगवत्करनि-ष्ठायुधचिह्नस्यात्यन्तालभ्यत्वात्। तदाकाराकारिततप्त-लोहमिति चेन्न। यस्य कस्यापि विष्णुचक्रदर्शनाभावात् शङ्खस्य च तथात्वात् यथेच्छालोहतापोऽत्र विवक्षितो भवति

न हि तेन किञ्चित् प्रयोजनं धर्म्मद्दानिस्तृते चक्रस्य वर्त्तुलत्वम्। शङ्खस्य च पृथुबुध्नाकारत्वं लोहेन परिकल्प्य कणाङ्गारेषु तप्तं कृत्वा ताभ्यां भुजयोरङ्कनं कारयामीति चेत् मूर्खजनसम्प्रतीतिः स्यात्। तथा चेत् विष्णुतल्पं शेष इति विष्णुवाहनं गरुड़ इति च लोहेन तद्रूपं च कृत्वा ताभ्यां चात्मीयं भुजद्वयं शङ्खचक्राभ्यामङ्कितं एतद्द्वन्द्वं कुर्व्वित्युक्ते कपोलयुगले गले किलाद्य भुजापेक्षया ऊर्द्ध्वकायस्य श्रेष्ठत्वात्, तत्र ज्ञानेन्द्रियबाहुल्याच्च कर्मेन्द्रियप्राचुर्य्ये बाहुद्वन्द्वे चिह्निते ज्ञानेन्द्रियसान्निध्ये कपोलयुगले च तप्ते ज्ञानकर्म्माभ्यां विना पशुवद्जन्तुमुचितो भवति। विधिनिषेधात्मकरज्जुद्वये भग्ने बन्धनिवृत्तिः स्यात्। तस्मात् ज्ञानकर्म्मस्वरूपबन्धनिवृत्तौ जातायां यथेच्छाविहरणशीलत्वं युक्तमेव परत्र यमादिभ्यो जितोभयलोकस्य तव किं भयं विद्यते। वैष्णवोपाधिना स्मार्त्तकर्म्मपरित्यागं कुर्वतस्तव शुभ्रवस्त्रधारणमात्रमेवावशिष्यते नत्वग्निहोत्रादिकं कर्म्म। अतः शुद्धवैष्णववृत्तिमाश्रित्य त्वं स्वस्थो भवेत्युक्तः व्यासदासः श्रीमच्छङ्कराचार्य्यमिदमब्रवीत्। स्वामिन् यतिवर्य्य! भवत्कृपया जातविवेकोऽस्मि नाहं चक्राद्यङ्कितः किन्तु मद्गुरुस्तदङ्काङ्कित इति श्रुतं, वैखानसमतमवलम्ब्य किञ्चित्तत्र वर्त्तिनं मां शुद्धाद्वैतवर्त्तिनं कुर्व्विति विज्ञाप्य दण्डवदभिवाद्य सम्पुटितकरद्वयशीर्षन्नम्रशिरस्कं व्यासदासं दृष्ट्वा करुणासमुद्रः श्रीशङ्कराचार्य्यः प्रहसन् तं इदमाह शृणु व्यासदास! भवतस्त्वनायासेन मुक्तिकारणम्।

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावय।

तस्मिन् विधावशक्तस्त्वं वाक्यमेतदुदीरय ॥
इत्यभ्यासपरित्यक्तद्वन्द्वेषणाषडूर्म्मिकः ।
विदित्वा परमात्मानं मुक्तो भवसि नान्यथा ॥
इति सम्बोधितः शिष्यः कृतार्थोऽहमितीरयन् ।
ब्रह्माहमिति संजल्पन् ययौ स्वकुलसंयुतः ॥

इत्यनन्तानन्दगिरिकृतौ वैखानसमतनिवर्हणं नाम नवमप्रकरणम् ।

---

## दशमं प्रकरणम् ।

एवं परिहृतेषु भक्तभागवतवैष्णवपाञ्चरात्रवैखानसेषु पुनरन्यः कर्म्महीनः प्रतिपक्षः समागतोऽभवत् नामतीर्थ इति । स तु श्रीशङ्कराचार्य्यं दृष्ट्वा इदमुवाच ।

भोः स्वामिन्! चिरकालनिष्ठाभ्यासपटिष्ठा भक्तादयः श्रीमद्भिर्निहत्ताः खलु इतःपरमागतं तृणीकृतकर्म्माणं विष्णुदासाग्रगण्यं नामतीर्थं मां विद्धि, विष्णुरेव गतिरिति निश्चितवता मया साधनान्तरं मन्त्रान्तरं गुर्वन्तरं देवतान्तरं परमपि न दृष्टं सर्वं विष्णुमयं जगदिति गुरूपदेशात् गुरुरेव मोक्षदः तदानीं भगवन्तमेवं प्रार्थयेत् इमं मच्छिष्यं निजपदारविन्दं प्रापयेति । एवं मद्गुरुभिरुक्तो भगवानपि तथा करोति तस्मान्मम पुनर्जननहेत्वभावात् जीवन्मुक्त एव मन्मतमन्यथा कर्त्तुमसमर्थः शेषोऽपि अतः सर्वे ब्राह्मणाः कर्महीनेति सुलभमनन्यदैवं विष्णुमवलम्ब्य भवन्तोऽपि मुक्ता

भविष्यतीति नामतीर्थेनैवमुक्तः परमयतिः श्रीमच्छङ्कराचार्य्य इदमाह भो नामतीर्थ! मूढ़तरोऽसि किञ्चिदपि बाल्ये गुरुकुले वासं कृत्वा भवता मन्दबुद्धिना नाधीतम्। कर्मभ्रष्टस्य भवतः जीवन्मुक्तिरेव सत्यमुक्तं तावत्, ज्ञानिनः प्रवृत्तिर्बालोन्मत्त-पिशाचवत् किल लोके भवितव्या अतो भवद्वृत्तिरपि निन्द्या-निन्द्यं विना पिशाचवद्भवत् । लोके मार्गद्वयं वर्त्तते कर्म्म-मार्गः ज्ञानमार्गश्चेति, तत्राद्यः स्वर्गादिकामनया श्रुतिस्मृ-त्युक्तकर्म्मकरणम्। ज्ञानमार्गो नाम वेदोक्तसर्वकर्म्माणि कृत्वा तत्फलसमर्पणं भगवति परमेश्वरे कर्त्तव्यमिति पूर्वमुक्तम् । कर्म्मफलपरित्याग एव ज्ञानमार्गमुमुक्षुमार्गश्च । तस्मान्मार्ग-द्वयाद्भ्रष्टं त्वां दण्डनं कर्त्तव्यम् । ब्राह्मणः कर्म्म कुर्वीते-त्यादिप्रमाणवचनानां सद्भावात् । एकदिनसन्ध्यातिक्रम-दोषपरिहारः प्राजापत्यकृच्छ्रत्रयेण भवति, बहुवर्षेषु गतेषु भवद्ब्राह्मण्यं किमु वक्तव्यम्। कर्म्मबहिष्कृतस्य विष्णुभक्तावपि अधिकारो नास्त्येव । उक्तञ्च भागवते भगवद्भक्तस्य लक्षणम् ।

न चलति निजवर्णधर्म्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे ।
न जहति न च हन्ति केचिदुच्चैः
सततमसुं तमवेहि विष्णुभक्तम् ॥ इति

तस्मान्निजवर्णधर्माच्चलितस्य तव ब्राह्मण्याभावात् सुतरां विष्णुभक्तिर्नास्त्येव । कर्म्मप्रतिपादकानां भगवद्वाग्रूपाणां वेदानामुल्लङ्घनात् ।

श्रुतिस्मृतिसदाचारा आज्ञारूपा हि मे मताः ।
आज्ञाच्छेदी मम द्रोही स याति नरकं सदा ॥ इति

भगवद्वचनात् श्रुतिस्मृती भगवदाज्ञे अतो भगवदाज्ञाच्छेदिनस्तव तन्मन्त्राधिकारमात्रं च न। गायत्रीमन्त्रमृते ब्राह्मण्याभावात् मन्त्रान्तरमवश्यमङ्गीकर्त्तव्यं साधनान्तरं जातकर्म्मादिकर्म्म गुर्वन्तरञ्च देवतान्तरं अग्निर्देवो द्विजातीनामितिवचनात् अग्निपरित्यागे कृते पतितो भवति एवं चतुर्णां विद्यमानत्वात् तदनुष्ठानाभावे महापातकदर्शनाच्च। ब्रह्मचारी गृही वनस्थः एतैः केन धैर्य्येण कर्म्मत्यागः कर्त्तुं शक्यते परमहंससन्न्यासं विना तेषां विधिदर्शनात्। "न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति।" तस्माद्भवान् सभां गत्वा द्वादश प्रदक्षिणनमस्कारान् कृत्वा समस्तापराधं क्षमस्वमिति विश्वासपूर्वकं सम्प्रार्थ्य ब्रह्मदण्डं समर्प्य ब्राह्मण्यं सम्पाद्य कृतार्थो भव इति श्रीशङ्कराचार्य्यैरुक्तः नामतीर्थः प्रणामशतेन श्रीगुरुं प्रीतं कृत्वा ब्राह्मण्यकर्म्मशीलः सगणोऽभवत्। तत्तन्मतज्ञानवादिनश्च स्वस्वसिद्धान्तनिरसनमाचार्य्यैकृतं दृष्ट्वा सर्व्वे कृतप्रायश्चित्ताः त्रिपुण्ड्रधारिणः पञ्चयज्ञपञ्चपूजापरायणाः शुद्धाद्वैतमतावलम्बिनो नियमाचारपरतन्त्रा बभूवुः।

इत्यनन्तानन्दगिरिकृतौ कर्म्महीनवैष्णवमतनिबर्हणं नाम दशमं प्रकरणम्॥

---

## एकादशं प्रकरणम्।

---

तदनन्तरमनन्तशयनात्पश्चिममार्गेण पञ्चदशदिनैः

सुब्रह्मण्यं नाम कुमाराविर्भूतस्थलं सकलदेशिकशिष्यैः सेवितः श्रीशङ्कराचार्य्यः परमहंसगुरुः प्राप।

ज्ञात्वा कुमारधारायां नद्यां शिष्यसमन्वितः।
भक्त्या संपूजयामास षण्मुखं शेषरूपिणम्॥
काषायवस्त्रदण्डाढ्यः कमण्डलुलसत्करः।
भूतिभूषितसर्वाङ्गो बभौ रुद्र इव स्वयम्॥
नानादेशस्थविप्रौघाः सुब्रह्मण्यं समागताः।
दृष्ट्वा तं शङ्कराचार्य्यमिदमूचुः सुविस्मिताः॥

स्वामिन्! ब्राह्मणा वयं ब्रह्मकुलजाः किल मन्वादिस्मृत्युक्ताचारशीलाः हिरण्यगर्भोपासनपरिलब्धमनःस्थैर्य्याः सर्वं ब्रह्मनिर्म्मितं जगदिति ब्रह्मण एव सृष्टिस्थितिलयकर्तृत्वं निश्चयं कृत्वा वसामः हिरण्यगर्भस्य जगत्कारणत्वं तज्ज्ञानान्मोक्षश्च श्रुतिसिद्धः। तथाहि

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।
सदा धार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥

एतद्दृचा हिरण्यगर्भः चतुर्मुखो ब्रह्मा अग्रे जगदादौ समवर्त्तत। भूतस्य आकाशादिप्रपञ्चस्य पतिः स्वामी तस्मादेव आकाशाद्युत्पत्तिरित्यर्थः। अयं हिरण्यगर्भः एक एव जातः परब्रह्मणः निर्गुणात् सत्यज्ञानानन्तलक्षणादाविर्भूतः एक एव हिरण्यगर्भ इत्यर्थः। स चादावेक एवासीदिति एवकारः इतरसत्तामात्रनिवृत्तिकरः। स पृथिवीं उत द्यां दिवि इमां सदा धार सततं धृतवानित्यर्थः। तादृशं ब्रह्माणमृते कस्मै देवाय हविषा विधेमः। अतः सर्वकर्तृत्वविशिष्टत्वं ब्रह्मण एव घटते। किञ्च सर्वदेवापेक्षया

ब्रह्मण एव परमत्वं श्रूयते। "ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मेति" इत्यत्र ब्रह्मा एतदपेक्षया परं नास्तीत्यर्थः। किञ्च वरुणोपनिषदि। सैषानन्दस्य मीमांसा भवतीत्युपक्रम्य स एको ब्रह्मण आनन्द इत्यन्तेन ग्रन्थेन सर्वापेक्षया ब्रह्मानन्दस्य श्रेष्ठत्वं दर्शितं तत्परानन्दस्याभावात्। स चतुर्मुखः तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुतेरयमर्थः। तत्कार्यरूपं जगत् सृष्ट्वा उत्पाद्य तदेव स्वसृष्टमेव अयमेव एवकारो देहलीदीपन्यायेन तथानुप्राविशदित्यनेन सम्बध्यते अनुकार्य्यं सृष्टिमनु प्रविष्टोऽपि ब्रह्मा तत्प्रपञ्चमनुप्रविश्य सच्च तेजोत्यन्तरूपं त्यच्च वाय्वाकाशरूपं चकारात् पञ्चभूतरूपशरीरान्तर्गतबुद्ध्यादिप्रेरकजीवरूपश्च अभवत्। बहुस्यां प्रजायेयेत्यादिवचनेभ्यश्च सर्वप्रपञ्चस्य ब्रह्मस्वरूपत्वं ब्रह्माधारकत्वञ्च निवृत्तिदशायां ब्रह्मण्येव लयत्वञ्च सिद्धं भवति। अतः सर्ववेदप्रतिपाद्यमानस्य श्रेष्ठत्वात्तस्य दक्षिणवामबाहुभ्यां विष्णुरुद्रोत्पत्तिदर्शनात् तद्भक्ताश्च तत्सम्बन्धिकमण्डलुकूर्च्चादिचिह्निताः कर्म्मज्ञानमार्गद्वयावलम्बिनः क्रमात् कमण्डलुकूर्चादिधारिणो वा जगद्विधिहोमविधिकर्म्मविप्रविधि शुद्धब्रह्मकमण्डलुकीर्त्तियाग कूर्चब्रह्मवेदिवृहत्कुक्षिविमतविधिवेदपाणिनिगमसूत्रश्रुतिपारीणनिगममुनिस्वाध्यायधर्म्मब्रह्मकर्म्मदेवकर्म्ममुनिकर्म्मयुगपितामहगुरुपरमेष्ठिद्विजपितामहादयः वयं भवन्तं सर्वज्ञं यतिपतिमीक्ष्य कृतार्थाः स्मः। किञ्चिदस्माभिर्विज्ञापितमवधारय किमद्वैतेन प्रयोजनम्। प्रथमजीवाद्धिरण्यगर्भात् सर्वे जीवाः जाताः। पुनः पुनः कर्मविकारैः जन्म-

मरणप्रवाहलीनामपि प्रभुर्ब्रह्मा लये एतान् सर्वान् सम्भूतान् ब्रह्माण्डादितरे स्वोदरे निवेश्य स्वयमेक एव वर्त्तते सृष्टौ पुन स्तान् स्वकर्मगोलान्तःस्थान् निजप्रकृत्या संयुज्य जन्ममरणप्रवाहसन्तानकरोदिति मद्गुरुभिरुपदिष्टः परमार्थः। ब्रह्मकुक्षिप्रापकालो मोक्ष एक तथा च ब्रह्मविदाप्नोति परमिति श्रुत्या चतुर्मुखस्वरूपज्ञानेन तन्मन्त्रोपासनेन च ब्रह्मवित् ब्रह्मस्वरूपज्ञ इत्यर्थः परं मोक्षमवाप्नोति ब्रह्मलोके विष्णुरुद्रादिदेवगोचरे चतुर्मुखकमण्डलुकूर्चादिचिह्नधरो मुक्तः क्रीडति तस्मात् भवान् कमण्डलुदण्डपाणिः ब्रह्मलोकयोग्य एव मदीयसम्बन्धात् विशेषात् भवसीति हैरण्यगर्भैरुक्तः परमगुरुः श्रीशङ्कराचार्य्यः पठति।

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति।
यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म॥ इति॥

ज्ञानार्थिनं भृगुमुद्दिश्य मित्रावरुणेनैवमुक्तम्। इमान्याकाशादीनि पञ्च महाभूतानि भौतिकदेहोपेतहिरण्यगर्भादिस्तम्बान्ताः सर्वे प्राणिनः यतो वस्तुनः जायन्ते। वै शब्दः स इमान् लोकानसृजतेत्यादिश्रुत्यन्तरप्रसिद्धिद्योतनार्थः। उत्पन्नानि च भूतानि येन वस्तुना जीवन्ति स्थितिं लभन्ते प्रयन्ति विनाशं प्रतिपद्यन्ते इमानि भूतानि यद्वस्त्वभिसंविशन्ति साकल्येन प्रविशन्ति यथा फेनतरङ्गबुद्बुदानामुत्पत्तिस्थितिलयाः समुद्रे भवन्ति तद्वज्जगदुत्पत्तिस्थितिलयकारणं वस्तु विचारय तदेव वस्तु त्वया पृष्टं ब्रह्म तस्य लक्षणन्तु 'सत्यं ज्ञानमनन्तं ब्रह्मेति' सत्यं

सर्वविकारार्थविलक्षणं तर्हि भावरूपं जड़मित्यत आह ज्ञानं जड़विलक्षणं यद्यभावविलक्षणो भावविशेषस्तर्हि घटादिकमपि तथेत्यत आह अनन्तं देशकालवस्तुपरिच्छेद-शून्यं एतावत्युच्यमाने भावः स्यात्। श्रुतौ व्यवच्छेदार्थ माह सत्यमिति सत्यमनन्तमित्युच्यमाने जड़मपि स्यात् तद्व्यावृत्त्यर्थं ज्ञानमित्याह यद्यपि ज्ञानमनन्तमित्युच्यमाने सत्यपदस्य न कृत्यं ज्ञानस्यासद्विलक्षणत्वात् तथापि ज्ञान-मसदिति सर्वासद्वादिनः सङ्गिरन्ते तत्पक्षाधिक्षेपार्थं सत्य-मित्याह। अयं भावः येनाऽपि सर्वासत्यत्वमङ्गीक्रियते तेनाप्यङ्गीक्रियत एव सत्वमन्यथासत्ये सत्वस्यानुपपत्तेः। ततो निरपेक्षत्वादितिहेतुभ्यः सत्त्वस्याङ्गीकरणीयतया तादृशसत्यत्वं जड़वैलक्षण्यञ्च स्वयंप्रकाशमानानन्दात्मन एव विद्यया सकलदुःखनाशदर्शनादेवञ्चेत् ज्ञानमित्येवास्तु कृत-मनन्तपदेनापीति न मन्तव्यं अन्तःकरणविद्यावृत्तेरपि ज्ञानशब्दाभिधेयत्वात् तदेव ज्ञानमिदमपीति बुद्धिनिवा-रणार्थमनन्त पदस्योपयोगात् पदत्रयभूमिं स्वरूप लक्षण-मखण्डैकरसं ब्रह्मबृंहतेर्धात्वर्थभूतं सर्वैर्मुमुक्षुभिरुपासनीयं तदिच्छाप्रकृतिप्रसृष्टं महदादिसर्वं जगत्, तस्मात् माया-गर्भान्तर्गतस्य हिरण्यगर्भस्य उपासनया मोक्षो नास्त्येव तस्य किञ्चिन् फलदत्वात् तर्हि परब्रह्मणोऽपि मोक्षो नास्त्येव तद्विचारस्याशक्यत्वात् अतः प्राप्तमविचार्य्यमेव ब्रह्मेति उच्यते। एतद्विचारकर्त्तव्यता च भाष्ये प्रथमा-ध्यायस्य प्रथमपादे बहुधा चिन्तिता।

अविचार्य्यं विचार्य्यं वा ब्रह्माध्यासानिरूपणात्।

असन्देहफलत्वाभ्यां न विचारं तदर्हति॥
अध्यासोऽहंब्रह्मशब्दो साङ्गब्रह्म श्रुतीरितम्।
सन्देहाच्चुक्तिभावाच्च विचार्यं ब्रह्म वै ततः॥ इति॥

आत्मा वा अरे द्रष्टव्य इत्यत्रात्मदर्शनफलमुद्दिश्य तत्साधनत्वेन श्रवणं विधीयते। श्रवणं नाम वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निर्णेतुमनुकूलो न्यायविचारः तदेतद्विचारविधायकवाक्यं विषयः श्लोकयोर्मं संगृहीतः। सन्देहसंग्रहेणैवार्थात् संशयप्रतीतिः। ब्रह्मविचारात्मकं शास्त्रमारभ्यमनारभ्यं वेति सन्देहः। पूर्वोत्तरपक्षयुक्तिद्वयं सर्वत्र सन्देहबीजमुन्नेयम्। तत्रानारभ्यमिति तावत् प्राप्तं विषयप्रयोजनयोरभावात् असन्दिग्धं विदित्वा तस्याविषयो भवति ब्रह्मत्वं सन्दिग्धम्। तथाहि तत् किं ब्रह्माकारेण सन्दिह्यते आत्माकारेण वा? सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्येन ब्रह्माकारस्य निश्चयात्। न द्वितीयः अहम्प्रत्ययेनात्माकारस्यापि निश्चयात् अथ स्यात्मविषयत्वेन भ्रान्तोऽहं प्रत्यय इति चेन्न अध्यासनिरूपणात् तमःप्रकाशवद्विरुद्धस्वभावयोर्देहात्मनोः शुक्तिरजतवदन्योन्यतादात्म्याध्यासो न निरूपयितुं शक्यते। तस्मादभ्रान्ताभ्यां श्रुत्यहम्प्रत्ययाभ्यां निश्चितस्यात्मनः असन्दिग्धत्वान्न विचारस्य विषयोऽस्ति नापि प्रयोजनं पश्यामः उक्तप्रकारेण ब्रह्मात्मनि निश्चितेऽपि मुक्त्यदर्शनात् तस्मात्तद्ब्रह्म न विचारमर्हतीति शास्त्रमनारम्भणीयमिति पूर्वपक्षिभिराक्षिप्ते अत्रोच्यते।

शास्त्रमारम्भणीयं विषयप्रयोजनसद्भावात् श्रुत्यहं प्रत्यययोर्विप्रतिपत्त्या सन्दिग्धं ब्रह्मात्मवस्तु अयमात्मा ब्रह्मेति

श्रुतिरसङ्गपदार्थं ब्रह्मात्मत्वेनोपदिशति। अहं मनुष्य इत्याद्यहं बुद्धिर्देहादितादात्म्याध्यासेनात्मानं गृह्णाति। अध्यासस्य च दुर्निरूप्यत्वमलङ्काराय तस्मात् सन्दिग्धं वस्तु विषयः तन्निश्चयेन च मुक्तिलक्षणं प्रयोजनं श्रुत्यादिविद्वदनुभवेन प्रसिद्धम्। तस्माद्वेदान्तवाक्यविचारमुखेन ब्रह्मणो विचारार्हत्वाच्च शास्त्रमारम्भणीयमिति सिद्धान्तः। विचारस्तु लक्षणप्रमाणाभ्यामस्तु तत्त्वनिर्णयावधिकः निर्णयानन्तरमखण्डं ब्रह्म स्वयमेव भवतीति निश्चयः। परब्रह्मांशजातरुद्रविष्णुब्रह्मणां परम्पराकर्तृत्वात्तदुपासनायाः फलमप्युक्तमेव।

अतो भो ब्राह्मणाः! कमण्डल्वादिचिह्नधारणं परिहर्त्तव्यम्। बृहन्नारदीयादिवचनविरोधात्। कूर्चादिवत् चतुर्मुखत्वादेः चिह्नस्य कर्त्तव्यत्वापत्तेश्च। हिरण्यगर्भ एव परममूलकारणमित्यप्यसङ्गतम्।

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तमात्मदेवं शरणं सनातनं मुमुक्षुर्वै शरणमहं प्रपद्ये॥

इत्यादिश्रुत्या ब्रह्मणः उत्पत्त्यादिश्रवणात्। जगतः परममूलं सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुतिप्रतिपाद्यं निर्गुणं ब्रह्मैव। यतो वेत्यादिश्रुतयश्च तत्परा एव। अतएव हिरण्यगर्भ इति श्रुतौ जात इति पदं सङ्गच्छते। सत्यादिस्वरूपब्रह्मणः सकाशादुत्पन्न इति तदर्थः। किञ्च चतुर्मुखत्वादि साकारोपासनायाः भेदघटितत्वेन मुक्त्यभावप्रसङ्गात्। तथा हि श्रूयते। 'उदरमन्तरं कुरुतेऽथ तस्य भयं भवतीति।' जीवब्रह्मणो योरल्पमपि अन्तरं भेदं कुरुते

अथ तस्य भयं संसारो भवतीत्यर्थः। तस्मात्त्वमस्यहं ब्रह्मास्मीति देशिकोक्तमार्गेण जीवब्रह्मणोर्भेदं परित्यज्य अभेदभावनया मुक्ता भवथेति आचार्य्येण बोधितास्ते हिरण्यगर्भवादिनः जगद्विधिप्रमुखाः ब्राह्मणाः ॐ तथेत्युक्ता आचार्य्यं नत्वा तथा चक्रुः।

इत्यनन्तानन्दगिरिकृतौ हैरण्यगर्भमतनिवर्हणं नामैकादशं प्रकरणम्।

—०—

## द्वादशं प्रकरणम्।

———

एवं परिहृतेषु हैरण्यगर्भेषु पुनरन्ये मुह्योब्रवीतिह्योत्र-कण्वह्योबादयः अग्निमतानुवर्त्तिनः प्रत्यवतिष्ठन्ते। ते श्रीमन्तमद्वैतमतसिद्धान्तकर्त्तारं सर्वज्ञं श्रीशङ्कराचार्य्यमि-दमूचुः। स्वामिन् परमेश्वर! अग्निरेवास्माकं देवता कथं मन्त्रवर्णात्।

अग्निरग्रे प्रथमो देवतानां
संजातानामुत्तमो विष्णुरासीत्।
यजमानाय परिगृह्य देवान्
दीक्षयेतद्धविरागच्छतं नः॥ इति

अग्रे सृष्टेः पूर्वकाले सर्वेषां देवानां प्रथमो ज्येष्ठः अग्निरेक एवासीत् तस्मात् संजातानां सम्यगग्निमनुसृत्य जातानां देवानां मध्ये विष्णुरुत्तम आसीत्। यतो दीक्षया

यजमानाय देवान् परिगृह्य नोऽस्माकं हविः आगच्छतं यस्य हविः हुतं भवति तस्य तत् प्रापयतीत्यर्थः। अग्निमुखा वै देवा इति मन्त्रान्तरात् अग्निर्देवो द्विजातीनामिति वचनाच्च तस्य सर्वोत्कृष्टत्वं प्राप्तं ब्राह्मणैस्तदुपासनायां क्रियमाणायान्तच्चिह्नानां विस्फुलिङ्गरूपमग्निशलाकानां धारणं कर्त्तव्यमेव। ब्राह्मणोचितस्य कर्म्मणः श्रौतस्मार्त्तरूपस्य तत्कारणत्वात्। ब्राह्मणानामस्माकं अग्निरेव देव इति सिद्धम्। तस्यैव सर्वपापहरत्वं नारायणोपनिषदि श्रूयते।

उद्दीप्यस्व जातवेदोऽपघ्नन् निर्ऋतिं मम।
पशूंश्च मह्यमावह जीवनञ्च दिशो दश॥ इति

अयमर्थः। हे जातवेदः! उद्दीप्यस्व मम निर्ऋतिं पापदेवतामपघ्नन् संहरन्नित्यर्थः। मह्यमेव पशूनावह। पशूनां चतुष्पदां धेनुप्रमुखानां दानं कुर्वित्यर्थः।

"जीवनं द्रव्य धान्यञ्च श्रियमिच्छेद्धुताशनादिति।"

वचनात् दिशः प्रागादिदिक्षु मम यत्र सुखवसतिर्भवति तद्दिशो दश देहीत्यर्थः। अतः सर्वैः विप्रैरग्निरेक एवोपासनीयः। तस्माद्भवन्तोऽप्यग्न्युपासनया कृतार्था भवत इति प्राप्ते।

आचार्य्यैरिदमुच्यते। नायमग्निः परो देवः। ऋग्वेद ब्राह्मणे अग्नेरवमत्व दर्शनात्, अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा देवता इति।

देवानां मध्ये अग्नेरवमत्वं विष्णोर्व्यापकचैतन्यस्य ब्रह्मणः परमत्वं तदन्तरे तद्द्वयमध्ये अन्याः सर्वाः देवता

इति, एवं वेदार्थे स्थिते कथमग्नेः परमत्वं वक्तुं शक्यते किन्तु देवानामवम इति देवानां पुरोहितः हविर्भागित्वर्थः। कर्म्मण एवाग्निर्देवता न तु ज्ञानस्य। तथा हि कर्म्मद्वारा ज्ञानकारणमपीति चेत् तस्य भूतेन जन्यत्वश्रवणात् गृहस्थानां श्रौतादिकर्म्मणि प्राप्ते सत्युपास्यदेवतात्वं कल्पनीयम्। अग्निमीडे पुरोहितमित्यादि श्रुतेः। यत्र यत्राग्निकारणवाक्यानि वर्त्तन्ते तानि सर्वाण्यपि भूताग्निपराण्येवेति योजनीयम्। तस्मात् कर्म्मण एवाग्निर्दैवता ब्रह्मणोऽग्रभूता। तदुपासनया चयिष्णुतल्लोकवासादिफललाभेऽपि मुक्त्यसम्भवात्। तस्मात्कर्माङ्गतयैवाग्न्युपासनं कृत्वा, 'जीवनं द्रव्य धान्यञ्च श्रियमिच्छेद्धुताशनात्' इतिवचनबोधितं फलं प्राप्य मुक्तये सर्वव्यापकचैतन्यस्योपासनां शुद्धाद्वैतवृत्तिमाश्रित्य मुक्ता भविष्यथ तच्चिह्नधारणं च परिहर्त्तव्यं प्रमाणाभावादित्येवमाचार्य्यैरुक्ताः ब्रह्मोन्नादयः श्रीशङ्कराचार्य्यं गुरुं प्रणम्य तत्कटाक्षस्वीकृताद्वैतवृत्तिनः तथोक्तं चक्रुः।

इत्यनन्तानन्दगिरिकृतौ अग्निवादिमतनिवर्हणं
नाम द्वादशं प्रकरणम्॥

---

## त्रयोदशं प्रकरणम्।

---

ततः परिपूर्णमण्डलतिलकाः रक्तकुसुमधारिणः सूर्य्यभक्ताः दिवाकरादयः श्रीशङ्कराचार्य्यमद्वैतमतसिद्धान्तगुरुं

नमस्कृत्वेदमूचुः। भोः स्वामिन्! सूर्य्य एव परमात्मा जगत्कारणं वर्त्तते। स एवास्माकं कुलदैवतमुपास्योऽस्ति तस्य जगत्कारणत्वं श्रुतयः एवाहुः। तथा हि "सूर्य्य आत्मा जगतस्तस्थुषश्च।" "असावादित्यो ब्रह्मेति च।" आभ्यां हि सूर्य्यस्य सर्वात्मत्वं अस्यैव च परब्रह्मत्वं च प्रतिपादितं भवति। ब्रह्मैव च सर्वजगत्कारणं यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतेः स्मृतिश्च।

नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने॥

इति। तस्मादेतस्य घृणिः सूर्य्य आदित्यमित्यष्टाक्षरमन्त्रोपासकाः रक्तचन्दनपुण्ड्रमालाधारिणः षड्विधा भक्ता वर्त्तन्ते। केचिदुदयमण्डलं ब्रह्मात्मकत्वेन सृष्टिकारणमिति भजन्ति। केचित्तु खमध्यवर्त्तिनं सूर्य्यं ईश्वररूपेण सर्वजगल्लयकारणमिति भजन्ति उपसंहारबलादुपक्रमोऽपि तेनैव भवतीति निश्चयज्ञानेन भजन्ति। केचित्तु अस्तमयकालबिम्बं विष्ण्वात्मकत्वेन सर्वजगत्परिपालनकारणं तदेव सृष्टिलयहेतुभूतं परतत्त्वमिति भजन्ति। केचित्त्रिमूर्त्त्यात्मकत्वेन त्रिकालमण्डलसेविनः केचिन्मण्डलेक्षणव्रतानुष्ठायिनः तन्मध्यवर्त्तिनं परमात्मानं हिरण्यश्मश्रूं हिरण्यकेशमित्यादि स्वरूपं भजन्ति। तत्रैकदेशिनस्तु भगवदीक्षणमात्रव्रतपराः सम्यङ्मण्डलं दृष्ट्वा षोडशोपचारपूजां समर्प्य कर्म्मफलं भगवदर्पणं कृत्वा वसन्ति न दर्शनं विनाऽश्नन्ति। पुनः केचित्तप्तलोहेन फालं भुजवक्षःस्थलेषु मण्डलचिह्नानि धृत्वा स्वमनस्येव देवमनुक्षणं ध्यायन्तः सन्ति। तेषां षण्णा-

मयमेक एव मन्त्र उपासनीयः घृणिः सूर्य्य आदित्यमिति तत्रानुस्वारलोपश्छान्दसः तस्मादेतन्मन्त्रस्य श्रेष्ठत्वादयमेव सर्वैरुपासनीयः तन्मण्डलस्तुतिपरा श्रुतयः भूयस्यः सन्ति तथाहि। "हंसः शुचिषद्वसुरन्तरिक्षसदिति।" "आदित्यो वा एष एतन्मण्डलं तपती"त्युपक्रम्य "य एवं वेदे"त्युपनिषदन्तेन ग्रन्थेन "ब्रह्मैतदमृत एष पुरुषः" इति सूर्य्यस्यैव ब्रह्मत्वं पुरुषत्वञ्च घटते। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्यादि पुरुषसूक्तप्रतिपाद्यः सूर्य्य एव कथं मण्डलादुपरितमोनिवृत्तये प्रसृताः रश्मयः शीर्षाणि तान्यस्य सन्तीति सहस्रशीर्षा स एवात्मत्वेन पुरीषु अन्तः शेते इति पुरुषः शस्य षः पुरुषः।

पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते॥ इत्युक्तेः॥

तस्य सर्वप्राणिकर्म्मसाक्षित्वात् सहस्राक्षः। अधः प्रसृता रश्मयः सहस्रपादाः तस्य ते सन्तीति सहस्रपात्। स एव भूमिं विश्वतः समन्तात् कृत्वा व्याप्य वृत्तमानेन भूम्युपरि सूर्य्यपर्य्यन्ताकाशस्य दशाङ्गुलपरिमाणत्वात् दशाङ्गुलमिति अतिक्रम्य अतिष्ठत् स्थित इत्यर्थः। इदं परिदृश्यमानं जगत् सर्वं पुरुष एष सूर्य्य एवेत्यर्थः। यद्भूतं पूर्व्वकल्पे यद्वृत्तं तदपि यच्च भव्यं वर्त्तमानकल्पापेक्षया भाविकल्पे यत् जगद्वर्त्तते तद्भानुरित्युच्यते तदपि स एव। उतामृतत्वस्य मोक्षस्य तत्कारणस्य च ईशानः कर्त्तेत्यर्थः। इत्यादिमन्त्रैः सूर्य्यस्यैव सर्वोत्तमत्वमङ्गीकर्तव्यम्। अतः पुरुषो ज्यायानिति अत्र बहुवारपठितपुरुषशब्देन एष पुरुष इति शब्द-

साम्यात् सर्व्ववेदप्रतिपादितः सूर्य्य एव पुरुषं कृष्णपिङ्गल-मित्यादिरुद्रप्रतिपादकमन्त्रस्थपुरुषशब्दोऽपि भगवत्पर एव भगवत्पुरुषशब्दावुभावपि सूर्य्यपरावेव कथं हन्ति सर्वदा गच्छतीति हंसः शुचिषु शुद्धेषु प्रदेशेषु सीदतीति शुचिषत् वसुः वसुदेवः स एव वासुदेवः तस्मिन् भगवत्पुरुषशब्दावनु-पाधिकौ वर्त्तेते ।

भगवानितिशब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी प्रवर्त्तेते वासुदेवे सनातने ॥ इति ॥

भारतवचनात् । ननु नेमौ सूर्य्यप्रतिपादकौ भगवत्-पुरुषशब्दौ किन्तु नारायणप्रतिपादकौ । तथा हि । वसु-देवस्यापत्यं वासुदेवः कृष्ण इत्यर्थः । तस्मिन् पूर्णब्रह्मरूपे कृष्णे भगवत्पुरुषशब्दौ निरुपाधिकौ वर्त्तेते । प्रकरणबला-दित्याचेिमे ।

पूर्व्वपक्षावलम्बी पुनराह भगवत्पुरुषशब्दौ सूर्य्यपरावेव तस्यैव विष्णुत्वात् कथं भगवतः सूर्य्यस्य द्वादशभेदात्मकत्वेन विष्णुनाम्नस्तदन्तःपातित्वेन च तद्विरोधो नास्त्येव । अरुणः सूर्य्यो भानुस्तपनश्चन्द्रो रविर्गभस्तिश्चार्य्यमा हिरण्यरेता दिवाकरो मित्रो विष्णुश्चेति वचनात् । "आदित्यानामहं विष्णुः ज्योतिषां रविरंशुमानिति" कृष्णवचनगीतादर्श-नात् । कृष्ण एव सूर्य्यः वासुदेवशब्दसाम्याच्च ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायण इति वचनात् तयोर्भेदा-भावः । हरतीति स एव हरिः स्वास्तमयकाले सर्व्वप्राणि-प्राणहरत्वं प्रदातृत्वं अरुणोदये भगवतः प्रसिद्धमेव लोके तथा व्यवस्थादर्शनात् रुद्रोऽपि स एव स्वशक्त्या लोकद्राव-

णस्य विद्यमानत्वात् अत एव नमस्ते रुद्रमन्यव इत्यादिग्रतमन्त्रप्रतिपादितः सूर्य्य एक एव। तस्य स्वयंव्यक्तस्य सर्व्वदेवात्मकत्वात्। किञ्च ब्रह्मविष्णुरुद्राः सृष्ट्यादिकारणात् सूर्य्यादेव जाताः सर्व्वलोकोद्धरणहेतुभूतस्य सूर्य्यतेजसः शुक्लवर्णत्वेन तद्वर्णादुत्पत्तिः तेषां युक्तैव यच्छुक्लं तद्ब्रह्मेत्युपनिषत्प्रमाणात्। अतः सूर्य्य एव सर्व्वैर्मुमुक्षुभिरुपास्यः। तस्य लिङ्गपूर्णमण्डलधारणादिभिरलङ्कृतगात्रास्तन्मन्त्रजपध्यानासक्ताश्च यूयं मुक्ता भविष्यथेति पूर्व्वपक्षे प्राप्ते।

श्रीशङ्कराचार्य्यैरिदमुच्यते भो दिवाकरमूढ़! किमुक्तं भवता तदसमञ्जसं वेदविरोधात्। तथा हि "चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽजायतेति" श्रुतेः। सूर्य्यस्यापि जन्यत्वदर्शनात् यज्जन्यं तदनित्यमिति तर्कसिद्धान्तस्य विद्यमानत्वात् घटादिवदनित्यतस्य सूर्य्यस्य कथं परब्रह्मत्वं सिध्येत किन्तु तादृक्श्रुतितात्पर्य्यन्तु सूर्य्यनिष्ठपरमात्मपरमित्युक्तेयं जगदीश्वराज्ञावशादेव सूर्य्यो भ्रमतीति तैत्तिरीयके समाम्नातम्।

भीषास्माद्वातः पवते भीषोदेति सूर्य्यः।

भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥ इति॥

तस्मात् सूर्य्यस्य पारतन्त्रिकत्वं प्राप्तम्। किञ्च सूर्य्यादिषु प्रभा जगदीश्वरस्यैव। तथोक्तं श्रुत्यन्तरे

न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्व्वं
तस्य भासा सर्व्वमिदं विभाति॥ इति॥

अत एवादित्यान्तःपुरुषस्य हिरण्यश्मश्रु हिरण्यकेश-मित्यादिप्रतिपादितस्यैव परमात्मनः सर्वोत्कृष्टस्य स्तुति-पराः श्रुतयः कथमादित्यं नित्यं वर्णयन्ति। ज्योतिः-शास्त्रे तदनित्यता वर्णिता।

सृष्टिः सरोजासनवासरादौ वियच्चराणां विलयस्तदन्ते।
आद्यन्तकालः स च कल्प उक्तः कल्पद्वयं स्याद्दिवसो विरिञ्चेः॥

इति॥ वियति आकाशे चरन्तीति वियच्चराः ग्रहाः सूर्यादयः तेषां सरोजासनस्य ब्रह्मणो वासरादौ दिनादौ सृष्टिरुत्पत्तिः तदन्ते दिनान्ते विलयः एवमाद्यन्तकल्पः सहस्रयुगप्रमाणः विरिञ्चेश्चतुर्मुखस्य दिनं दिवाकालः रात्रिरपि तादृशी कल्पद्वयमितो ब्रह्मदिवस इत्यर्थः एवं ब्रह्म दिन-कर्तुः सूर्यात् ब्रह्माद्युत्पत्तिर्भवदुक्ता तस्मादेव विदितो भव-दधिकारः। ब्रह्मायुःशताब्दमध्ये एकस्मिन् दिने जन्मादि-वृत्तिं प्राप्तस्य सूर्यस्य ब्रह्मपुरुषशब्दवाच्यत्वं भवता सम्पा-दितं किमु वक्तव्यं भवद्विद्यावैषम्यम्। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्यादिना भगवतो विश्वरूपत्वं प्र-दर्शितं नित्यस्य परमात्मनो लोकवहिरन्तर्गतस्य यद् य-द्विशेषणमुक्तं तत्तत् सूर्यस्येति भ्रान्त्या वक्षि सूर्यगतः पर-मात्मा सूर्यमण्डलवहिरन्तःस्थित एव तद्द्वारा तमोनिर्ह-रणं स एव करोति। जगदीश्वरादन्यस्य तादृग्विधशक्त्य-भावात् सूर्यादन्यः देवमनुष्यतिर्यग्जन्तुष्वपि परमात्मा ने-त्रान्तर्गतः सन् वर्त्ततएव दीप्तेः तद्रूपत्वात् य एषोऽक्षिणि पुरुषो दृश्यते यश्चासावादित्ये स एक इति श्रुतेश्च एको-ऽप्यात्मा सर्व्वजगदन्तर्गतः। प्रतिपादितञ्चैतत् ॐ अन्त-

स्तद्धर्मोपदेशादिति व्याससूत्रेऽस्माभिः । तस्मात्तच्चिह्नधारणं पाषण्डोद्बोधकं त्यक्त्वा स्मार्त्ताचारपरिलब्धशुद्धाद्वैतविद्याबलामुक्ता भवथ । एवमाज्ञप्ता दिवाकरादयः सौराः परमगुरुं नत्वा तत्काटाचलब्धशुद्धाद्वैतवादिनः शिष्या बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ सौरमतनिवर्हणं नाम त्रयोदशं प्रकरणम् ॥

---

## चतुर्द्दशं प्रकरणम् ।

—:*:—

ततस्तत्र गतैर्विप्रैः सर्व्वैरपि यतीश्वरः ।
समाश्रितो ययौ तस्माद्दायोराशां जयेच्छया ॥
शिष्येषु त्रिसहस्रेषु केचिच्छङ्खप्रपूरणैः ।
केचिद्वाद्यविशेषैश्च केचित्तालैः शुभोक्तिभिः ॥
केचिद्घण्टानिनादैश्च करदीपैश्च केचन ।
केचिद्व्यजनवातैश्च पिच्छवातैस्तथापरे ॥
समर्चयन्ति संन्यस्तसुखदुःखं यतीश्वरम् ।
तत्तद्देशगता विप्रा दृष्ट्वा तच्छिष्यतां गताः ॥
एवं प्रतिदिनं गत्वा तत्र तत्र गतान् द्विजान् ।
कुमतस्थान् परानन्दभाजः कृत्वा शुभोक्तिभिः ॥
पुरङ्गणवरं प्राप गणपस्याश्रमं शुभम् ।
तत्र नद्यां हि कौमुद्यां स्नात्वा विघ्नेशमव्ययम् ॥
सम्पूज्य यतिराड् तत्र मासमास सहानुगैः ।
पद्मपादमुखाः शिष्याः पञ्चपूजापरायणाः ॥

दिग्गजा इति विख्याताः परविद्याप्रभेदिनः ।
परपक्षहरोद्युक्तवचसः प्रौढ़वादिनः ॥
तद्वाक्यं शिरसा धृत्वा शिष्योऽन्यः पुरजिद्बलः ।
नियन्ता सर्वशिष्याणां पाकादिषु च कर्म्मसु ॥
समर्च्य च गुरुं भिक्षां दत्त्वा तस्मै परात्मने ।
पद्मपादस्तदन्येषां शिष्याणां चकुसेयुं तम् ॥
अददन्नोजनं नित्यं ब्रह्मार्पणमिति स्मरन् ।

सायन्तने सर्वशिष्याः परमगुरुमाचार्य्यशिरोमणिं द्वादशवारं प्रदक्षिणनमस्कारान् कृत्वा बहुधा स्तुत्वा छक्कातालकराः परमेवं स्तुवन्तो नृत्यन्ति परिपूर्णोऽहं ब्रह्म सत्यं सत्सुखरूप चिदानन्दोऽहं शुक्तौ रजतवदाभातीदं मयि विश्वं निश्चितु मिथ्येति स्थूलकारणलिङ्गदेहैः आकाशादिवदस्पृष्टोऽहं तादृङ्मयि बन्धः को वा दारादिर्नाम भविष्यति तत् अम्भःकणजालैरस्पृष्टं तामरसच्छदमिव देहोहम भवं मत्तो जाता प्रकृतिरनन्ता तद्गर्भान्महदुद्भुतं हि तस्माज्जातो ऽहङ्काराख्यस्त्रिगुणयुतोभवस्तस्माज्जाताः रुद्रविष्णुब्रह्मादयः। तेभ्यः सृष्टिस्थितिलयमभवन्नितरां कार्य्यार्थिभिरेतैः कृतमपि तद्धृदयगतोऽहं साक्षी परमः सर्वथाऽहं वहिरन्तःस्थः सम्यक्ज्ञानफलप्रद एव सत्यं ज्ञानमनन्तं ब्रह्म सर्वथा सर्वमयोऽहं सर्वातीतः सर्वव्यापी कारणमेकः भानुमण्डलमध्यवर्त्तिपुरुषः साक्षी गतपरमद्वन्द्वोऽहं ईशो नित्यः शाश्वतविभवः सर्वमुक्तिदः सदुपासनावतां सन्त्येवेते वेदा मामद्वैतमजं न वदन्ति किं मनसाऽहं स्पृष्टः किंवा करणैर्दूरतरैरपि वेद्यः आत्मा ब्रह्म सदद्वयमेकः

सच्चित्सुखरूपोऽहं सकलं मामिति ये मनुजा विन्दन्ति मायामेतां हि तरन्ति ते नित्यं मां ये निगमावेद्यं सत्यं मनसा धारयन्ति हि ये मुक्तिस्तेषामनुतुलिता स्याद्- भक्तिमतां किमसाध्यं लोके मम सच्चित्प्रदमद्भुतरूपं सम- मखिलेष्वपि गुरुमद्वैतं यमनियमादियुतः स्मरति हि चेत् सममखिलात्मा समुपास्यः स्यात् इत्यन्तो जल्पन्नेवं सत्यगुरुमभि नत्वा बहुधा श्रान्ताः गुरुसन्निधिविश्रान्ताः शान्ताः पद्मपादाद्याः शिष्याः एवं प्रतिदिनभावं प्राप्ताः श्रीशङ्करगुरुपदगतचित्ताः ।

इत्यनन्तानन्दगिरिकृतौ गुरुस्तुतिर्नाम प्रकरणं चतुर्दशम् ॥

---

## पञ्चदशं प्रकरणम् ।

—::०::—

एवमानन्दसन्तुष्टमाचार्य्यं सेवकानपि ।
तत्पत्तनद्विजाः प्रेक्ष्य किमेतदिति चाब्रुवन् ॥
न हि युष्मन्मतं सम्यगिव भाति हि पश्यताम् ।
आकाशवन्निरालम्बमद्वयं ब्रह्म केवलम् ॥
मनोवागादिवृत्तीनामगोचरतरं परम् ।
कथमस्योपबोधाय योग्यं स्यान्मतमीदृशम् ॥
तत्त्वज्ञास्मन्मतं सम्यगाचारन्तु शुभाप्तये ।
गाणपत्यमितिख्यातं षड्भिर्भेदैर्विजृम्भितम् ॥
समस्तवेदतात्पर्य्यैस्तदेव हि समीरितम् ।
तदाचरध्वमत्यन्तशान्तिदं मोक्षदं नृणाम् ॥

तुण्डे कदन्तचिह्लाभ्यां चिह्नितं शक्तिसंयुतम् ।
महागणपतिं यस्तु सदा ध्यायत्यनन्यधीः ॥
तन्मूलमन्त्रपठन-परः सन् ब्राह्मणोत्तमः ।
यो वर्त्तते स एवात्र मोक्षभाग्भवति ध्रुवम् ॥ इति ॥

तद्ध्यानन्तु,

बीजापूरगदेक्षुकार्मुकलसच्चक्राब्जपाशोत्पल—
व्रीह्यग्रस्वविषाणकाञ्चनघटोद्भास्वत्कराम्भोरुहः ।
ध्येयो वल्लभया च पद्मकरया श्लिष्टोज्ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥ इति

विश्वोत्पत्तिविपत्तिसंस्थितिकर इत्यनेन स्रष्टादि हेतुत्वं गणेशस्य घटते। ब्रह्मादित्रयेऽपि एकस्यैव गणपतेर्विद्यमानत्वात्। गणानां रुद्रविष्णुब्रह्मगणानां पतिः स एक एव प्रथमः आसीत्। अहमेक एव गणपतिरासमिति श्रुतेः तस्माद्गणपतिरेव सर्व्वातीतः परमात्मा तन्मायारचिता ब्रह्मादय इति प्राप्ते आहुः श्रीमदाचार्य्याः ।

भो गाणपत्य ! सत्यमुक्तं भवता गणपतेः सर्व्वोत्तमत्वं, तन्मायाबलाद्रुद्राद्युत्पत्तिरेवेति भवद्भिः प्रतिपादितं किल तदसमञ्जसमिव प्रतिभाति कथं सगुणस्य गजमुखस्य गणपतेः रुद्रगणैः सह लयानुगस्य जगत्कारणत्वं कल्पयितुमुचितम्। किञ्च रुद्रसुत इति लोके प्रसिद्धिरस्ति तस्य ब्रह्मत्वे कल्पिते पित्रादिकारणत्वं सुतस्यानुचितमेव अतो रुद्रादिकारणं परब्रह्मैव। सदेव सौम्येदमग्र आसीत्। ब्रह्म वा इदमग्र आसीदित्यादिवाक्यादहमेक एव गणपतिरासमिति वाक्यस्यार्थ उन्नेयः तस्य विश्वोत्पत्तिविपत्तिसंस्थिति-

करत्वं सिद्धं भवतीति निराकृते महागणपतिमते पुनराह स्वामिन् सर्व्वज्ञ! भवदनुकूलं भवद्भिरुक्तं अङ्गाभावः पुरुषः निरालम्ब एव भवति तस्यापि देवस्याभिमानाभावात्। अतः साङ्गेन पुंसा भवितव्यम्। यस्याङ्गं धारयति पुरुषः तस्याभिमानं तस्मिन् वर्त्तते प्रायेणापि तत्रैवैस्तल्लोको गच्छते अतः सालोक्यस्य मुक्तिरूपत्वात् तत्प्राप्तिर्निरङ्गस्य कथं भविष्यति मम गिरिजापुत्रस्य मदीयानां गणनाथगणपत्यादीनां चेति अन्तन्तं गिरिजापुत्राभिधं महागाणपत्यवरं श्रीमदाचार्य्य इदमाह।

शृणु जड़मते गिरिजापुत्र! ब्राह्मणस्य किमङ्गं वक्तव्यं प्रथमं ब्रह्मकुलजत्वमेकमङ्गं द्वितीयं पुंसवनादिवेदोक्तकर्म्माङ्गं तृतीयं ब्रह्मचर्य्याद्याश्रमाङ्गं एवमङ्गत्रयविराजमानस्य सद्ब्राह्मणस्य निरङ्गता कथं ब्राह्मण्याङ्गेन सममन्याङ्गं न विद्यते। ब्राह्मणकर्त्तव्येषु स्नानाचमनप्राणायाममार्ज्जनगायत्रीजपाग्निहोत्रवेदाभ्यासेश्वरपूजादिषु वेदोक्तसत्कर्म्मसु किं न देवा विद्यन्ते सर्वदेवत्वस्यास्पदस्य ब्राह्मणस्य देवाङ्गं कथं न विद्यते तादृग्विधाङ्गेन वर्त्तमाने पुनरङ्गधारणं पशोरिव चिह्नं भवति।

किञ्च ब्राह्मणस्य किं वा लक्षणमित्युक्ते शिखायज्ञोपवीतधारणवेदोक्तकर्म्माचरणं लक्षणं तर्हि तत्क्षत्रियेऽपि विद्यमानत्वात् तत्रातिव्याप्तिरित्युक्ते ब्रह्मकुलजत्वं विशेषलक्षणम्। एतस्मान्नैवैव ब्राह्मणस्य चारितार्थ्यात् अङ्गधारणं पाषण्डताजनकं परिहर अङ्गाङ्गीकारे महापातकमस्तीति पुराणश्रवणात् वेदविरुद्धत्वाच्च। किञ्च सदुपासकानां मू-

लाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञासहस्रारेषु चतुर्दलषड्दलदशदलद्वादशदलषोडशदलद्विदल-सहस्रदलेषु स्वर्णविद्रुमनीलपिङ्गलधूम्रतेजःकर्पूरवर्णेषु स्थिता गणपतिब्रह्माविष्णुरुद्रजीवात्मपरमात्मानः तदुपरि श्रीपरमगुरुरिति स्वतन्त्रदेवताः सम्प्रति देहधारिणः अतो गणपतेर्मूलाधारगतस्य सर्वाधारकर्तृत्वं वर्त्तते । तदुपरि गतानां चक्राणां तदधिकारिणां ब्रह्मादिदेवतानां च तदाधारकत्वादस्य तथाविधे गणपतावन्यस्य तुच्छदृष्टिमिक्कं भुजयोः कर्त्तव्यमिति निरर्थकम् ।

किञ्च मूलाधारस्थे गणपतौ सर्वोत्तमे परमात्मनि सम्यगाज्ञाचक्रगते अनयोरधिकारे भवन्तौ किमेतस्य चिन्त्य दिसततिसहस्रनाडीनां मूलाधाराश्रितानां नियामकत्वमात्रं गणपतेरधिकारः। तज्जनितनाडीभिरूर्ध्वाधःप्रसृताभिर्देहस्थितिकारणभूताभिरुपरिचक्राधारभूताभिर्गणपतेः कारणत्वं प्राप्तं परमात्मा सर्वगतोऽप्याज्ञाचक्रवासी भूत्वा स्वाधस्थजीवरुद्रविष्णुब्रह्मगणपतीन् स्वस्वाधिनियोगेषु प्रेरयित्वा स्वयं साक्षी निर्गुणः सच्चिदानन्दमयः सर्वातीतः सर्वोत्कृष्ट इति सम्यग्वेदेषु प्रतिपादितः । अतः परमात्मानमाज्ञाचक्रगतं चिन्तय मुक्तो भवसीत्युपदिष्टः गिरिजापुत्रः सगणः त्यक्तलिङ्गः परमगुरोः शिष्योऽभवत् ।

पञ्चपूजापरो नित्यं पञ्चयज्ञपरायणः ।
गुरुशुश्रूषणासक्तः समभूद्गिरिजासुतः ॥

इत्यनन्तानन्दगिरिकृतौ महागणपतिमतनिबर्हणं
नाम पञ्चदशं प्रकरणम् ॥

## षोड़शं प्रकरणम् ।



एवं निरस्ते महागणपतिवादिनि गिरिजापुत्रे पुनरन्यो हरिद्रागणपतिमतवादी प्रत्यवतिष्ठते मन्त्रवशात् । स आह । स्वामिन्! मदीयं मतं शृणु । हरिद्रागणपतिरेव सर्वजगत्कारणम् । न च तत्त्वे प्रमाणाभावः श्रुतेरेव प्रमाणत्वात् । तथाहि ।

गणानां त्वा गणपतिं हवामहे
कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पतिम्
आ नः शृखन्नुतिभिः सीद सादनम् ॥ इति ॥

भो यतिवर्य्य ! गाणपत्यमतमयुक्तमिति प्रतिपाद्य चिरकालादारभ्य रूढ़मतपद्विनं गिरिजापुत्रं तदाश्रितांश्च भ्रष्टान् कृत्वा वर्त्तसे किमिदमुचितं तर्हि इदानीमागतं प्रतिपक्षविघ्नदुण्ढिराजगणपतिकुमारनामानं मां विद्धि । किं गणेशमते न्यूनताऽस्ति तत्प्रतिपादकमन्त्रस्यायमर्थः। गणानां रुद्रविष्णुब्रह्मेन्द्रादिगणानां गणपतिमध्यक्षं त्वां हवामहे ध्यानं कुर्म्महे । किं विशिष्टं कवीनां भृगुगुरुशेषप्रभृतीनां कविमुपदेष्टारमित्यर्थः । पुनः कीदृशं उपश्रमवस्तमं उपमश्रवसां सकलच्छ्रवणसर्वं विद्याविदां मध्ये तममत्यन्तं श्रेष्ठम् । पुनः कीदृशं ब्रह्मणां प्रपञ्च कर्त्तृणां ज्येष्ठराजं तद्द्वारा ज्येष्ठप्रभुमित्यर्थः ब्रह्मादिभिरपि सृष्ट्यादिषु विघ्नेशः पूज-

नीय इत्यर्थः। आरम्भितकार्य्येषु सर्व्वेष्वपि देवमनुष्यादिभिः सर्व्वैर्विघ्नेशः पूजनीय इति पुराणेषु च बहुधा वर्त्तते तं ब्रह्मणस्पतिं ब्रह्मणामपि पतिमित्यर्थः। आ नः आ समन्तात् नः श्रुतिभिः स्तोत्रैः शृण्वन् साधनं निर्विघ्नं शुभं सीद ददात्वित्यर्थः। अतः सकलदेवपूज्यो गणपतिरेव। ध्यानन्तु।

पीताम्बरधरं देवं पीतयज्ञोपवीतिनम्।
चतुर्भुजं त्रिनयनं हरिद्रालसदाननम्॥
पाशाङ्कुशधरं देवं दण्डाभयकराम्बुजम्।
एवं यः पूजयेद्देवं स मुक्तो नात्र संशयः॥ इति॥

स्कन्दपुराणवचनात्। जगदादिकारणं गणपतिरेक एव तत्कटाक्षाज्जाताः तदंशभूताः सर्व्वे ब्रह्मादयः अतः सर्व्वदेवपितामहं विघ्नेशं भवन्तोऽपि भजन्तु। तस्य चिह्नद्वयन्तुण्डैकदन्तात्मकं तदाकारतप्तलोहाङ्कितभुजद्वयस्तन्नक्ताग्रगण्यस्तस्यैव मुक्तिः करस्था भवतीति पूर्व्वपक्षे प्राप्ते श्रीमच्छङ्कराचार्य्यैरिदमुच्यते।

किं गणकुमार! भवद्बुद्धिवैकल्यमप्रतिहतं जगत्कारणवाक्यैः, सदेव सोम्येदमग्र आसीदित्यादिभिः प्रतिपादितं ब्रह्मैव गणपति रिति तस्यांशा ब्रह्मादयः सृष्ट्यादिकर्त्तार इति भृग्वादीनामपि सर्व्वविद्यागुरुर्गणपतिरिति च प्रसङ्गात् किञ्चिदन्यच्च सम्यक् प्रतिपादितं भवता। शुद्धबुद्धमुक्तस्वरूपं सत्यं ज्ञानमनन्तं ब्रह्मगणपतिरेवास्तु सर्व्ववाच्यस्य ब्रह्मणः गणपतिशब्देन किमपराद्धम्। अतः परमात्मनः सकाशात् ब्रह्मादयो जाता इत्यविरुद्धम्। ब्रह्मादीनां तदंशसम्भूतत्वात् रुद्रपुत्रो गणपतिरिति तत्राप्यविरोधः। अंशांशिनो-

रभेदात् अतो देवकार्य्यार्थी जगन्निर्माणादिषु विघ्नहर्त्ते-त्यर्थः । संसारिणामपि सर्वविघ्ननिवृत्तये तादृग्गणपतिरु-पास्य एव । अतः सर्वैर्मुमुक्षुभिरीशविष्णुगणपतिशक्तिसूर्य्याः पञ्च तत्तत्पुरुषबुद्धिभेदेनांशांशिभावमापन्ना उपास्या एव । किन्तु तुण्डैकदन्तचिह्नधारणमात्रमेव विरुद्धं लिङ्गिनः पाषण्डत्वश्रवणादेदविरोधाच्च । तस्मात्तुण्डैकदन्तचिह्नं परित्यज्य शुद्धाद्वैतवृत्तिमाश्रित्य पञ्चपूजां स्नानादिनित्यकर्म्म च कुर्व्वन् मायानिवृत्तौ जातायां तद्द्वारा भग्नलिङ्गशरीरः सन् मुक्तो भवसीत्येवमुपदिष्टो गणकुमारस्तथाङ्गीकृत्य गुरु-वरं ध्यायन् पञ्चपूजापरायणः सुखमाप ।

इत्यनन्तानन्दगिरिकृतौ गाणपत्यैकदेशिमतनिवर्हणं नाम षोड़शं प्रकरणम् ।

---

## सप्तदशं प्रकरणम् ।

---*---

एवं परिहृते गाणपत्यैकदेशिमते पुनरन्यः उच्छिष्ट-गणपत्युपासकः दक्षिणेतरमार्गानुवर्त्ती हैरम्बसुत इति प्रसिद्धः प्रत्यवतिष्ठते । स तु श्रीमदाचार्य्यमिदमुवाच । भोः स्वामिन् ! हैरम्बसुतोऽहमागतोऽस्मि केन विधिना गण-पतिमतमयुक्तमिति श्रीमद्भिर्भवद्भिरुक्तम् । श्रूयतामस्मन्मते शैवागमे द्वादशगणपतिप्रकरणे महागणपतिमतमेकं हरि-द्रागणपतिमतमेकं उच्छिष्टगणपतिमतमेकं नवनीतगण-पतिमतमेकं स्वर्णगणपतिमतमेकं सन्तानगणपतिमतमेकं

एवं षड्विधगणपतिमतानि भवन्ति। एते मत प्रवर्त्तकाः षण्महामन्त्राः उपमन्त्रषट्कञ्च तत्तन्मतावान्तराणि ज्ञान-मतानि वामावलम्बकानि। उच्छिष्टगणपतेर्मतस्य ज्ञान-मतं हैरम्बमित्युच्यते। उभयोरपि प्रधानाङ्गयोर्वाममार्गा-वलम्बकत्वेनोच्छिष्टगणपतिरिति नाम प्राप्तम्। तदीय-ध्यानन्तु।

चतुर्भुजं त्रिनयनं पाशाङ्कुशगदाभयम्।
तुण्डाग्रपीतमधुकं गणनाथमहं भजे॥ इति
तदङ्गहेरम्बस्य तु ध्यानमेतत्।
महापीठनिषण्णं वामाङ्कोपरिसंस्थिताम्।
देवीमालिङ्ग्य चुम्बन्तं स्पृशंस्तुण्डेन वै भगम्॥ इति

अत एव तयोरङ्गाङ्गिनोर्वामबाहुल्यवशात् जीवेशयो-रैक्यानुसन्धानं युक्तमिति मतद्वयमप्यहमवलम्ब्य कुङ्कुमा-ङ्कितललाटः पुण्ड्रान्तरपरित्यागी सन्ध्यादिसर्वकर्म्माणि इच्छावशगानि कृत्वा संवित्तीर्थपानजनितानन्दविदितस-कललोकः एतत्समम्मतान्तरं नास्तीति नित्यहृष्टोऽभवम्।

किञ्च मदीयाचारे धर्म्मद्वयमेवानुवर्त्तनीयम्। पुरुषाणां सार्वजातिकानां एकजातिवदित्येको धर्म्मः, स्त्रीणां सार्व-वर्णिकानां एकजातिवदित्येको धर्म्मः, तेषां तासाञ्च संयोगे वियोगे च दोषाभावः। अस्या अयमेव पतिरिति नियामकाभावात्। तासु रजःसिक्तादौ सुसम्पर्के जाते रुधिर-बाहुल्यात् आनन्दाधिक्याच्च (सर्वे वर्णाः समानजातयः दाम्पत्यव्यवस्था नास्ति। येन केनापि पुरुषेण स्वस्वहेरम्बतां विभाव्य यां काञ्चित्स्त्रियन्तच्छक्तिं विचिन्त्य सुरतेन सम्भोगः

कार्य्यः इत्यधिकः क्वचित् ) आनन्दप्राप्तिरेव ब्रह्मप्राप्तिरिति तस्य सच्चिदानन्दलक्षणाच्च । तस्मादुच्छिष्टगणपतेरखण्डानन्दरूपत्वेन ब्रह्मरूपत्वेन च तन्मतमनन्यभेद्यम् । तदंशाः सर्वे ब्रह्मादयो देवाः, अंशांशिनोरभेदः प्रतिपादितो रुद्रकाण्डे । नमकेपि, नमो गणेभ्यो गणपतिभ्यश्च वो नमो नम इति । गणरूपेभ्यो गणपतिरूपेभ्यश्च रुद्रेभ्यो नम इत्यनेन गणत्वं गणपतित्वञ्च एकस्मिन् रुद्रे घटते ॐकारातीतस्य परमशिवस्य गणपतिरूपत्वेन तदंशाः सर्वे देवा इति युक्तम् । अतो ब्रह्मप्राप्तये कर्म्मणो कारणत्वात् प्रवृत्तिर्व्यर्थैव ।

किञ्च न कर्म्म मुक्तिसाधनं किन्तु कर्म्मत्याग एव । न कर्म्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति श्रुतेः । त्यागः सन्न्यासः स तु द्वन्द्वातीतः शान्तो दान्तः उपरतस्तितिक्षुः समाहितः श्रद्धायुक्तो भूत्वात्मन्येवात्मानमनुपश्येदिति श्रुतेः । उपरतिः सन्न्यासः । तितिक्षा शीतोष्णद्वन्द्वसहनं एतदुपलक्षणं सुखदुःखमानापमानपुण्यपापादिष्वपि द्वन्द्वता योजनीया । द्वन्द्वातीतवृत्तेः मोक्षहेतुत्वे तत्तद्वृत्त्यवलम्बनस्य उच्छिष्टगणपतिमतानुकूलत्वात्तन्मतं मुमुक्षुभिः सर्वैरुपासनीयमिति प्राप्ते श्रीमदाचार्य्यैरुच्यते ।

भो हेरम्बसुत ! भवन्मतमनुचितम् । वेदविरोधसद्भावात् । वेदो हि ब्राह्मणादीनामुचितधर्म्मानुक्त्वा पश्चान्मद्यादापद्यपि इदमग्राह्यमिति निषेधमाह । न सुरां पिबेत् न कलञ्जं भक्षयेत् न परदारान् गच्छेत् नाग्नीनुद्वासयेदित्यादीनि बहूनि वचनानि सन्ति । तस्मादेतदग्राह्यमतस्य

सुतरामयुक्तमेवाङ्गीकरणं मुमुक्षुभिरङ्गीकर्त्तव्यमिति भवदुक्तं तद्रूपिन्यास एवेति अपरे च यदित्यादिना त्यागेनैके अमृतत्वमानशुरित्यादिना श्रुत्यर्थेन सन्न्यासिन एव मोक्षाधिकारित्वमुक्तं भवतीति तस्य द्वन्द्वातीतत्वादिगुणविशिष्टत्वात् सुखदुःखमोहादिपरित्यक्तस्य महायतेः परमहंसस्य दृक् यत्र यत्र पतति तत्र ब्रह्मस्वरूपनिश्चयात् सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चनेति ब्रह्मव्यतिरेकेण प्रपञ्चासत्तामात्ररूपिणः शुद्धाद्वैतं ब्रह्माहमस्मीति महामार्गारूढस्य सर्वभूतान्तःकरणसाक्षिणः शुद्धचैतन्यस्य द्वन्द्वातीतत्वं युक्तमेव। तमुपमार्गं ज्ञात्वा भवत्प्रमुखाः संसारिणः सुरां पिबामः कलञ्जं भक्षयामः प्रतारणबुद्धिरीत्या जल्पथ तदत्यन्तदुष्टं नरकप्रदमेव मतं तस्माच्च मूढबुद्धिं परित्यज्य ब्रह्मसभानुग्रहात् कलितप्रायश्चित्ताः यूयं मुक्तिमार्गमवलम्ब्य पञ्चपूजापराः पञ्चयज्ञादिनित्यकर्मनिरताश्च कथं मूलाधारादिब्रह्मरन्ध्रान्तं प्रतिचक्रे गणपतिब्रह्मविष्णुरुद्रान् जीवपरमात्मगुरुसर्वदेवताः परिकल्प्य पञ्चपूजासुरःसरमजपामन्त्रजपपरास्तद्देवताध्यानमात्रेणैव मुक्ता भवथ नान्यद्विचारणीयं भवद्भिरित्युपदिष्टा हेरम्बसुतादयः तत्सभानुग्रहात् कृतप्रायश्चित्ताः श्रीमत्परमगुरुं नत्वा तत्कटाक्षप्राप्तब्राह्मणधर्माः श्रुत्याचारं परिप्राप्ता अद्वैतविद्याभ्यासतत्परा बभूवुः।

इत्यनन्तानन्दगिरिकृतौ उच्छिष्टगणपतिमतनिबर्हणं नाम सप्तदशं प्रकरणम्।

---

# अष्टादशं प्रकरणम् ।

अतः परं नवनीतस्वर्णसन्तानगणपत्युपासकाः समागत्य श्रीमदाचार्य्यस्वामिनमिदमूचुः । स्वामिन् ! वयं नवनीतादिगणपत्युपासकाः मदीयाचारस्तु वेदोक्तकर्म्मानुकूलेन तत्तदुपासनां कुर्मः । किन्तु गणपतेरुत्तमत्वं सर्वेषां देवानां तदंशजातत्वञ्च निश्चित्य गणपतिमतसिद्धान्तमोक्षाभिलाषिणः सर्वं जगत् गणपतिरिति ध्यायिनो भवामः । न किल तत्र विवादः कर्त्तव्यः तस्य सर्वकार्य्येषु सर्वदेवपूज्यत्वात् आदौ पूज्यो गणाधिप इत्यादिप्रमाणसद्भावाच्च कथं भवद्भिर्महागणपत्यादिमतत्रयं निराकृतं तद्व्यतिरेकेण परमार्थिकाभावादिति । तत्तदुपासकैश्च तत्प्रीत्यर्थं हरिद्रादिधारणं कर्त्तव्यमेवेति प्राप्ते श्रीशङ्कराचार्य्यस्वामिभिरिदमुच्यते ।

मतमिति यत्तदेवासत् । यूयं मूढाः पारमार्थिकावेदिनः सत्यं ज्ञानं शृण्वन्तु । प्रकृतिपुरुषाभ्यामादौ महत् तत्त्वे जाते तद्गर्भे अहङ्कारतत्त्वं गुणत्रयात्मकं उत्पन्नं तदेव रुद्रविष्णुब्रह्मरूपमभवत् ते क्रमात्स्वशक्तितस्तत्तद्गुणविशिष्टजगदुत्पत्तिहेतवोऽभवन् । तत्र किल तामसाहङ्कारे रुद्रसृष्ट्यन्तर्जाताः गणपतिकुमारभैरवाः ते जगति स्वल्पाधिकारिणः गणपतिः सृष्ट्यादि प्रयोजनेषु मनुष्यसाध्येषु सृष्ट्यादिप्रयोजनेषु ब्रह्मादिसाध्येषु च तत्तदादिपूज्यत्वं

वर्त्तते तत्र सर्वकार्य्यनिर्विघ्नतासिद्धये कार्य्यादौ गणपतिः पूजनीयत्वेन स्थापितः लोके सार्वभौमेण तत्तत्कार्य्ये तत्तदधिकारकल्पनावत्। अस्तु वा गणपतिरेव परमात्मा। अंशांशिनोरभेदात्। तस्माद्विप्रैर्गणपतिब्रह्मविष्णुरुद्रजीवपरमात्मानः देहान्तर्गत मूलाधारादिचक्रेष्वेवोपास्याः तादृगनुष्ठानाशक्तानां ब्राह्मणानां गणेशेनोमाहरीशाः प्रतिमादिषु पञ्च पूज्याः सर्वथा प्रमाणरहितं हरिद्रादिचिह्नमसङ्गतमित्युपदिष्टाः वीरभद्रैकदन्तादयः नवनीतस्वर्णसन्तानगणपत्युपासकाः परमगुरुं नत्वा परित्यज्य हरिद्रादिचिह्नानि पञ्चपूजापराः शुद्धाद्वैतविद्यावादिनः शिष्या बभूवुः।

इत्यनन्तानन्दगिरिकृतौ गणपतिमतत्रयनिवर्हणं नाम अष्टादशं प्रकरणम्॥

---

## ऊनविंशं प्रकरणम्।

—::०::—

ततः श्रीशङ्कराचार्य्यः भवानीनगरं प्राप। तस्मादिलां पादपद्मैर्विचित्रां कुर्वन् पलाशोत्तमाङ्गार्चिताङ्घ्रिद्वयां तां सकलपूर्णरूपां सशिष्योऽभजत् सः। एवं सकलयतिगुरुः श्रीशङ्कराचार्य्यः समस्तशिष्याचरितपूजाङ्गीकारविलसत्पादकमलः सर्वदेवार्चितो गुरुरिव प्रकाशमानमूर्त्तिः तत्र मासकालमतिष्ठत्। तत्रस्थाः परमगुरुं यतिशिरोमणिं शिरोभिरभिवाद्य सविनया इदमूचुः। स्वामिन्! अस्मन्मतमति विचित्रतरं शृणु। भगवती किल महाशम्भुशक्तिः

प्रपञ्चमूलकारणं गुणातीतरूपिणी तदाशयवशात् महत्तत्त्वादिजगदखिलमुत्पन्नं तद्द्वारा ब्रह्माद्युत्पत्तिस्तच्छक्त्युत्पत्तिश्च सिद्धा भवति तस्याः मनोवाग्बुद्ध्यतीतत्वात् तदंशाशाः भवान्याद्यस्तारविन्दवेवापरास्तद्दुर्गाद्याभिधाधिपास्तत्पादाकाराकारितस्वर्णमाद्यवगलद्भ्राह्वो यथं जीवन्मुक्ता एव विद्योपासकानाञ्च फलप्रदत्वात् सैव च प्रकृतिः प्रधानमिति च व्यवह्रियते तदुक्तं साङ्ख्यसिद्धान्ते ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ॥

श्रुतिश्च,

अजामेकां लोहित शुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः इति ॥ प्रकृतिपुरुषयोः शिवशक्त्योश्चन्द्रचन्द्रिकान्यायेनाभेदः । तथा च श्रुतिः ॥

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति ।

एतदुपासनयैव मुक्तिं श्रुतिराह । विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति । इयमेवैका मुमुक्षुभिरुपासनीया तस्याः कटाक्षलेशेनैव मुक्तिदर्शनात् प्रकृतिरीश्वरस्येत्यनेन श्रुतिवचसा प्रकृतिपुरुषयोरभेदात् सदेव सौम्येदमग्र आसीदित्यादि जगदुपादानकारणवाक्यानि प्रकृतिपराण्येव । अतः प्रकृत्युपासका इति निरवद्यं किञ्च प्रणवनिष्ठावर्णादुवर्णाद्युत्पत्तिर्यथा तथैव तच्छक्तेर्भवान्या लक्ष्म्यादिशक्त्युत्पत्तिः सिद्धैव । अतः सर्वदेवकारणस्य रुद्रस्य या शक्तिः चन्द्रचन्द्रिकान्यायेन तद्रूपबोधरूपिणी स्वाधीनवल्लभेति

प्रसिद्धा सैव भवानीति निश्चयज्ञानवतामस्माकं न कश्चि-द्विचारः। परमपुरुषैर्भवद्भिरपि तदङ्गधारणपुरःसरं सैवो-पासनीयेति प्राप्ते श्रीमदाचार्य्यस्वामिन इदमाहुः।

ननु भवदुक्ता भवानी संसारभयहारिणी जगत्कारण-मिति परन्तु पुरुषस्य श्रेष्ठत्वादीशज्ञानेनैव मुक्तिरिति सर्व-त्रापि प्रतिपादितत्वाच्च। आत्मानमात्मना ध्यात्वा मुक्तो भवति नान्यथेतिमुक्तिवचनदर्शनात् अजातीतस्य परमा-त्मन एव ज्ञानेन मुक्तिः। ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः। साङ्ख्यसिद्धान्तेऽपि प्रकृत्यपेक्षया मायातीतस्य ज्ञानादेव मुक्तिः। तैत्तिरीयोपनिषदि अजास्वरूपमुक्त्वा तदितरत्व-मीश्वरस्य दर्शितम्।

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥
इति श्रुतेः॥

विद्ययाऽमृतमश्नुत इति विद्यापदार्थस्तात्त्विकं सर्वम-नित्यमात्मैव च शुद्धबुद्धमुक्तसच्चिदानन्दरूप इति ज्ञानमेव। प्रकृतेरजात्वन्तु अनादिप्रवाहरूपेण स्वर्गादेरमृत त्ववदा-पेक्षिकम्। अन्यथा एकमेवाद्वितीयं ब्रह्मेतिश्रुतिविरोधा-पत्तेः। ज्ञानस्य मोक्षसाधनत्वे मुक्तिदशायां न हि तत् सद्भावः शङ्कनीयः। यतः तत्त्वज्ञानमपि जले कतकरेणु-वत् अविद्यामपहृत्य स्वयमपि नश्यतीति नाद्वितीय-त्वविरोधः। अतः परस्मिन्नद्वितीये ब्रह्मणि भवान्यास्तद्-बोधकारणं घटते। अतो विद्याशब्दवाच्या भवानी तदुपा-सनेन चित्तशुद्धौ जातायां लिङ्गशरीरभङ्गद्वारा मोक्षः

सिद्ध: । अतो भवानीभक्ता भवन्तोऽपि सर्वाणि सगुणोपासनानि अल्पफलत्वात् परित्यज्य प्रमाणरहितं वेदविरुद्धकुङ्कुमपुण्ड्रस्वर्णपादादिचिह्नानि परित्यज्य शुद्धाद्वैतविद्यया ब्रह्माहमस्मीति निश्चयज्ञानेन मुक्ता भवथ। एतत्प्राप्तये भिद्रादिपशुमार्गो न साधनमिति सम्यगुक्ताः त्रिपुरकुमारविन्दुभक्तपूर्णानन्दपूर्णभगवच्चरणसेवकशुद्धमत्यादयो भवानीभक्ताः परमगुरुं यतिशिरोमणिं नत्वा त्यक्तलिङ्गाः क्षतांजलयः शुद्धाद्वैतव्रत्याश्रिताचाराः स्नानसन्ध्यावन्दनपञ्चपूजादिनिरताः सच्छिष्या बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ शङ्करविजये नामैकोनविंशं प्रकरणम् ॥

---

## विंशं प्रकरणम् ।

---

अतः परं तत्समीपदेशस्थाः कुवलयपुरादिपत्तनाश्रिताः समागत्य परमपुरुषमाचार्य्यस्वामिनं नत्वेदमूचुः । स्वामिन् ! महालक्ष्मीर्मातैव सर्वफलदा जगतां उत्पत्तिस्थितिलयकारणं भगवतो विष्णोः प्राणशक्तिः । तद्द्वारैव पार्वतीवाण्यादिशक्तयश्च बहुधा उत्पन्नाः । किञ्च त्रिमूर्त्तीनां मूलकारणमपि तच्छक्तिरपि सैवैका भगवत्येव परमपुरुषस्य सच्छब्दवाच्यत्वं तत्कारणस्य प्रकृतेरसच्छब्दवाच्यत्वञ्च तैत्तिरीयोपनिषदि समाम्नातम् । असद्वा इदमग्र आसीत् ततो वै सदजायत इति अतो मूलप्रकृतिः

परमशक्तिः ब्रह्मादिप्रलये सर्वानपि संभक्ष्य गुणातीतत्वात्सत्स्वरूपेणाग्रे आसीत् पुनः सृष्टिकाले तद्गर्भादेव ब्रह्मादयो जायन्त इति जगदुपादानकारणं सैवैकैव। तत्रापीश्वरोऽप्यस्तीति यदुच्यते तदन्तर्वर्त्त्येव सोऽपीति विचार्य तदादीनां तज्जन्यत्वात्। अतः परब्रह्मण्यपि सविमर्शता कल्पनीया। तयोः सार्वकालिकनित्यत्वाच्चन्द्रचन्द्रिकान्यायेन च भवद्भेदस्यापि विरुद्धत्वाभावात् परप्रकृत्युपासनं भवद्भिरपि कर्त्तव्यं मुक्तिकाङ्क्षिभिरिति। अतः कमलायाः सर्वोत्कृष्टत्वात् तदुपासनं तच्चिह्नानां कमलपद्माक्षमालाकुङ्कुमानां भुजकण्ठतलादिषु धारणं कुर्म्मः भवद्भिरपि तथैवानुष्ठेयं मुक्त्यर्थमिति श्लिष्टभूषणगङ्गाकीर्त्तिलक्ष्मीविलासरमाभक्तादिभिः सर्वैर्विज्ञापितः श्रीशङ्कराचार्य्यगुरुरिदमाह।

श्रुतमद्भुतं भवद्भिः प्रतिपादितं मतम्। भोः कमलाभक्ताः! भवन्मतं न सम्यगाभाति। यतः स ईशः सर्वानसृजत स आत्मा तत्त्वमसि श्वेतकेतो! सदेव सोम्येदमग्र आसीत्। यः सर्वज्ञः सर्वविदित्यादिबहुश्रुतिप्रपञ्चसारो विचारितः परमात्मा अपहतपाप्मा सर्वातीतः सर्वकारणं सर्वाधारः सर्वमयः स एकोऽद्वितीयः परानन्दमयः सदा वर्त्तते। तदिच्छारूपायाः प्रकृतेस्तदाधारत्वेन तस्मिन् परमात्मनि प्रकृतिर्गुणमयी निजाङ्गं परित्यज्य नष्टसर्वविकारा सद्रूपा समभवत्। पराधीनवृत्तिप्रत्यासत्तिग्रस्तेः स्वतन्त्रलेशाभावात् कथं मुक्ता स्वस्य मुक्त्यभावे कथं मुक्तिप्रदा भवति। विद्यारूपायास्तस्यास्तथाविधसमर्थतास्तीति चेत्।

ज्ञानस्यापीश्वरजीवभिदारूपमूलाज्ञाननिवृत्तिमात्रमेव सङ्घटते। अतो मुक्तिसमवायिकारणस्य विद्यारूपस्यैव परमेश्वरत्वं वक्तुं न शक्यते। सर्वातीतं ब्रह्म प्रसिद्धं अहमस्मि ब्रह्माहमस्मीति यो वा ध्याता तस्यैव मुक्तिः अन्येषामनित्योपासकानामनित्यलोकप्राप्तिः। क्षीणे पुण्ये पुनर्मर्त्यलोकप्राप्तिरिति सिद्धम्। अतो यूयं कमलकुसुमपुण्ड्रादिकं परित्यज्य शुद्धाद्वैतविद्यामाश्रित्य मुक्ता भवथ। इत्युपदिष्टास्ते परमगुरुं नत्वा शुद्धाद्वैतविद्यानिरताः स्नानध्यानपूजादिसत्कर्मिणः शिष्या बभूवुः।

इत्यनन्तानन्दगिरिकृतौ शक्तिमतैकदेशनिराकरणं नाम प्रकरणं विंशम्।

—::०::—

## एकविंशं प्रकरणम्।

——०——

एवं निराकृतेषु दुर्गालक्ष्मीमतसिद्धान्तिषु पुनरन्ये पुस्तकपुण्ड्राः कमलपाणयः निगमसाविन्नपरागमसुवागादयः शारदोपासकाः स्वामिनं नत्वेदमूचुः। भोः स्वामिन्! विचित्रवेषधारित्वं सम्पाद्य दुर्गाकमलादिभक्तान् मतभ्रष्टान् कृत्वा सर्वसम इव वर्त्तसे इदानीमागतान् विद्धि नः शारदाभक्तान् निगमादीन् परमतभेदनपटून्। किलास्मन्मतं निगमसिद्धम्। वेदानां तद्रूपत्वात् तेषां नित्यत्वाच्च वेदानां नित्यत्वप्राप्तौ तद्रूपायाः शारदायाः नित्यत्वमस्ति न वेति सन्देहाभावात् सैव जगत्कर्त्री, नित्या

वाग्वेद इति श्रुतेः वाचा विरूपनित्ययेति श्रुतेश्च । अतः परात्परतरा शारदा जगदुपादान कारणं या नित्यप्रभा ब्रह्मणयेऽस्ति सैव वाक् स ब्रह्मात्मा शिवनारायणादिशब्द-वाच्यगुणातीतहत्तिः तद्द्वारा परब्रह्माद्युत्पत्तिरित्यवि-रुद्धम् । अतः सर्वैर्मुमुक्षुभिः सैव निरन्तरमुपासनीया । अतो भवन्तोऽपि वृथाशाजालं परित्यज्य पुस्तकादिभिश्चि-ह्निताः वागुपासनं कुरुध्वं वाक्स्वरूपज्ञानेनैव मुक्ता भवथ । अवेदार्थवित्पुरुषाः तं परमं वाग्रूपं न विदुः । मा-वेदविन्मनुते तं बृहन्तमिति श्रुतेः । अतः सद्ब्रह्मादिशब्द-वाच्यं परं वाग्रूपं सम्यग्वेत्ता पुरुषो मुक्तः । ब्राह्मणस्य तद व्यतिरेकेण मुक्त्यभावात् । साङ्गो वेदोऽध्येतव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यश्चेति श्रुतेः । अतः सर्वदा निश्चयेन वाग्रूपानुसन्धानं कुरुत । एवं प्राप्ते ।

श्रीमदाचार्य्यैरिदमुच्यते किं निगममूढ़ ! ब्रवीषि भव-दज्ञानं केन वारयितुं शक्यम् । भोः सारस्वताः ! भवन्मत-मसमञ्जसं कस्मात् श्रूयताम् । वर्णमात्रस्य नित्यत्वमभि-मतं उत वेदादिरूपवर्णमन्ततेः ? । नाद्यः उत्पन्नो गकारः नष्टो गकार इत्यादि प्रतीतेर्वर्णमात्रस्यानित्यत्वात् । सोऽयं गकार इत्यादि प्रतीतेस्तु सेयं दीपज्वालेतिवत्सादृश्यावल-म्बनत्वात् । सर्वप्राणिप्रलये सर्वस्य वर्णस्यापि प्रलयसम्भ-वाच्च । न द्वितीयः । यस्य निश्वसितं वेदा इति जन्यत्व-दर्शनात् यज्जन्यं तदनित्यमिति प्रमाणेन चानित्यत्वाव-गतेः । वाचा निरूपनित्यया इत्यादि श्रुतिस्तु प्रवाहनामा-दितया स्वर्गादिवदापेक्षिकं नित्यत्वं प्रतिपादयति नात्य-

न्तिकम्। अतः षड़ङ्गपरिशोभितस्य वेदराशेः महायुगान्ते प्रलयदर्शनात् तदनुप्रवृत्ते महायुगे सूर्य्यःकिल कालयुगादिकर्त्ता महर्षिभ्यो यच्छास्त्रं प्राह तदेव वेदादिकमिति। उक्तञ्च सूर्य्यसिद्धान्ते। युगे युगे महर्षीणां स्वयमेव विवस्वतेति। अतः प्रतियुगप्रलयवृत्तिसम्पत्तिश्रुतिप्रत्यासत्तिशक्तेः सरस्वत्याः कथं शक्यं नित्यतां रचयितुं देवानामनित्यत्वेऽपि ब्रह्मणो वक्तृस्थायाः सरस्वत्या नित्यत्वं तद्वाचकजगत्सृष्टिस्तस्य ब्रह्मशक्तित्वादिति यद्युच्यते न हि तदपि रमणीयम्। चतुर्मुखस्य प्रथमजीवस्यानित्यत्वे तच्छक्तेरनित्यत्वमस्ति वा न वेति सन्देहाभावात् परब्रह्मशक्तिः परप्रकृतिर्महदादि तत्व कारणं सरस्वतीति यद्युच्यते न हि तदपि समञ्जसम्। ईश्वरव्यतिरिक्तस्य सर्वस्यापि प्रलयदर्शनात् वाङ्मनो वृत्तिद्वयातीतस्यैव परमात्मनः सद्ब्रह्मादिशब्दवाच्यत्वं न तु प्रकृतेः। अतः सगण निगम मूढ़बुद्धिं परित्यज्य सर्वशब्दवाच्यस्य तद्वृत्त्यतीतस्य परमात्मनः सम्यक्ज्ञानेनैव भुक्तिरन्यथा न ह्येवम्। अतः शुद्धाद्वैतवृत्तिमाश्रित्य स्नानादिसत्कर्म्म कुर्व्वन् पञ्चपूजापरायणः त्वं कर्म्मफलं ब्रह्मार्पणमिति कृत्वा अनुष्ठिते सत्कर्म्मणि अनेकदुरितक्षयकारणे ज्ञानप्रवृत्तौ जातायां लिङ्गशरीरभङ्गद्वारा मुक्तो भवसीति सम्यगुपदिष्टः निगमः सर्वैः स्वकीयैः सह त्यक्तलिङ्गः कृतार्थोऽहमस्मीति परमगुरुमाचार्य्यस्वामिनं नत्वा शुद्धाद्वैतवृत्त्याश्रितोऽभवत्॥

इत्यनन्तानन्दगिरिकृतौ शक्तिमतैकदेशनिवर्हणं नाम एकविंशं प्रकरणम्॥

# द्वाविंशं प्रकरणम् ।

——::*::——

एवं परिहृतेषु दुर्गाकमलावाणीमतसिद्धान्तिषु पुनरन्ये शक्तिवादिनः राजश्यामलोपासकाः शक्तिविलासचिदानन्दादयः वामाचारिणः प्रत्यवतिष्ठन्ते । ते समागत्याचार्य्यस्वामिनमिदमूचुः । भोः स्वामिन् ! संवित्स्वरूपमविदित्वा यतिवेषधारी मतवञ्चिरिव समागत्य दुर्गाद्युपासकानां वृत्ति मन्यथासिद्धां कृत्वा करतलीकृतब्रह्मतत्त्व इव वर्त्तसे । किं तव ज्ञानेनाद्वैतेन तस्य शशविषाणवद्वन्ध्यापुत्रवद्गगनारविन्दवदत्यन्तासत्त्वात् सृष्टौ प्रलयेऽपि च भेदस्यैव सिद्धत्वात् । ईश्वरेऽपि विमर्शः पृथगेव यथा भर्त्तरि भार्य्यान्या तथैवेत्यर्थः । योजन्मादिविरुद्धत्वात् स्वतन्त्राशक्तिः शिवस्यापि बलकारिणी । तया विना तस्य तृणचलनक्रियायामप्यसमर्थत्वात् । अतः शक्तिरेव शिवस्यापि कारणम् । तद्द्वारा जगत्प्रवृत्तिदर्शनात् । अतश्च विमर्शवादिनामस्माकं मतमेव श्रेयस्करम्, निर्विमर्शवादिनान्तु भवतां मुक्तिरपि नास्ति । कथमित्युक्ते मुक्तिकारणाभावात्, मुक्तिकारणं हि विद्या किल, अतश्चापि विद्यावादिनां मुक्तिः करस्था विमर्शप्राप्तिरेव मुक्तिरिति । एते राजश्यामलोपासकाः मणीन्ध्रसुन्दोत्रवीतरूपपरामृतभम्बादयः पञ्चदश्युपासकाः शक्तिविलासचिदानन्दचिदङ्कुरविचरणोपासकाश्चन्द्रादयश्च सङ्गिरन्ते । अव्यक्तरूपविमर्श एव ब्रह्म

तदतीतं वाङ्मनोव्यतिरिक्तं ब्रह्मास्मीति यदुच्यते तत्त-दपि तदाश्रितं शिवशब्दवाच्यं तद्व्यतिरिक्तपराभावात् त-थानित्यत्वं श्रुत्यागमसिद्धं नित्यपदार्थयोर्मध्ये शक्तेरधिकत्व तज्ज्ञानकारणं रहस्येष्टादिकं कर्म्म कुर्वतां ज्ञानसिद्धि-दर्शनात्। अतो वयं षोड़श्युपासकाः पूर्णाभिषिक्ताः कृतार्थाः कृतकृत्याः समाः किल। तस्मात् विविधाना-मस्माकं निस्त्रैगुण्ये पथि विचरतां किमवकुण्ठनं लोक-त्रये विद्यते। विहिताविहितमार्गद्वयसूत्रबद्धानां स्वर्गनरक-प्रवृत्तिः। ज्ञानिनां मत्तगजवन्निरवकुण्ठनगतिप्रवृत्तेर्विद्यमा-नत्वात्। पूर्वयुगे भृग्वगस्त्यऋभुनिदाघजड़भरतविश्वामित्र-रामादिषु वामोपासकेषु लोकत्रयातीतवृत्तेः ज्ञानोत्तरञ्च दृष्टत्वात् तेषां मुक्तिः करस्थैव; तस्माच्च तदाचारशील-वतां नः जीवद्दशायामपि मुक्तिरेव।

यदि नो पश्चिमं जन्म यदि वा शङ्करः स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥ इति ॥

देव्यागमवचनस्य सत्यत्वात् अतो विद्यावतां नः न कि-ञ्चिद्विचारणीयम्। भवन्तोऽपि सर्वं परित्यज्य विद्योपासका भवथेति प्राप्ते श्रीमदाचार्य्यः पठति।

भोः पूर्णाभिषिक्त! भवन्मतमसत्यम्। कथमनित्यत्वात् तथा हि श्रुतिः यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदित्यादिजा सिद्धज्ञानिनः पुरुषस्य आत्मातिरेकादर्श-नात्। तदानीं विमर्शः कुत्र कल्पनीयः। ईषदपि तद्व्यतिरेके जगदभावात् जगत्सत्यत्वे हेतुः प्रकृतिः जगद-भावे किं प्रकृत्यभावः शङ्कनीयः। अनित्यप्रकृतिज्ञानेन

किं फलं अथ च तस्याः बहुरूपतोक्तौ इन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुत्या गुणमयी गुणकारणञ्च सा भवति। अतो नित्यायाः प्रकृतेरुपासनापेक्षया सत्यादिलक्षणलक्षितस्य परमात्मनो विशेषज्ञानेन मुक्तिदर्शनात्। स एक एव सर्वैर्मुमुक्षुभिरुपासनीयः तस्य सङ्कल्पत्वादिच्छामात्रेणैव महदादिजगदुत्पत्तिकारणत्वात् ईश्वर एक एव सर्वैरुपास्यः। गृहस्थे गृहिणीजातसुखानुभवो गृहस्थस्यास्ति देवे तदभावात् किञ्च ईश्वरस्यापि किञ्चित्करत्वमुक्तं तदपि न सम्भवति सर्वशक्तिः सर्वमयः सर्वकर्षणमिति श्रुतिभ्यः वाङ्मनोवृत्त्यतीतस्य ब्रह्मणस्तदाश्रितत्वमुक्तं महद्विवेकस्य न लक्षणं किमु वक्तव्यं कलञ्जभक्षणशीलस्य वक्तव्यं किं सात्वतम् अभक्ष्यभक्षणशीलस्य सुतरां प्रामाणिकत्वाभात् वेदविरोधाच्च। अतो वामाचारवतां ब्राह्मण्यविच्छित्तिदर्शनात् भवतां प्रायश्चित्तं कर्त्तव्यं भृग्वादिवद्वयं कृतार्था इत्युक्तं मन्दबुद्धीनां युष्माकं भृग्वादिसमता कथं स्यात् विष्णुर्भृगुपादताड़ितो ब्रह्मादिधियमेव चकार। अगस्त्यादिषु समुद्रपानादिसाहसकर्माणि वर्त्तन्ते भवतां तादृक् शक्तिः कथं नास्ति। तस्मान्मूढ़बुद्धिं परित्यज्य ब्राह्मण्याद्भ्रष्टैर्भवद्भिः प्रायश्चित्तं कर्त्तव्यमिति सम्यगुपदिष्टास्ते परमगुरुं नत्वा सच्छिष्याः कृतप्रायश्चित्ताः शुद्धाद्वैतवादिनः सत्कर्मशीलाः पञ्चपूजापराः बभूवुः।

इत्यनन्तानन्दगिरिकृतौ शक्तिमतैकदेशत्रितयनिवर्हणं नाम द्वाविंशं प्रकरणम्॥

# त्रयोविंशं प्रकरणम् ।

—:::*:::—

तस्मात्पुरादुत्तरमार्गगामी श्रीशङ्कराचार्य्यगुरुः सशिष्यः ।
स उज्जयिन्याख्यपुरं ददर्श कापालिकाचारपरैः समेतम् ॥
स्थित्वा हिमासं तत्रैव तत्रस्थानाह सत्वरम् ।
आचारः प्रोच्यतां युष्मत्कुलागतविधिश्च कः ।
इति पृष्टा यतीशस्तमूचुः कापालिकाः परे ॥
स्फटिकैरर्द्धचन्द्रैश्च जटाभिः परिशोभिताः ।

स्वामिन्! अस्मदाचारः सर्वप्राणिसन्तोषकरः कर्म्महीनः, कर्म्मणा न मुक्तिरिति वचनात् । मदुपास्यो भैरव एक एव जगत्कर्त्ता । ततः प्रलयो भवतीति यो वा प्रलयकर्त्ता स एव स्थित्युत्पत्त्योरपीति । उपसंहारबलेनैव नीयतां स उपक्रम इति शास्त्रवृत्तेः । उपसंहारबलाविर्द्धारित उपक्रमोऽपि चेति शास्त्रवृत्तेः तदंशा एव सर्वे देवाः तत्तदधिकारसम्पन्नाः श्रीमद्भैरवाज्ञां शिरसा धृत्वा तदुक्तिप्रत्यासन्नशक्तयः तत्तत्कार्य्यपराः बभूवुः ॥

किञ्च मद्गुरुभिरेवमुक्तम् । एकोऽपि भैरवो ह्यष्टमूर्त्तिधरः
असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः ।
कापाली भीषणश्चैव संहारश्चाष्ट भैरवाः ॥ इति वचनात् ॥

असिताङ्गो विष्णुरूपः । रुरुर्ब्रह्मरूपः । चण्डः सूर्य्यः । क्रोधो रुद्रः । उन्मत्तः इन्द्रः । कापाली चन्द्रः । भीषणोयमः ।

संहार: स्वयम्। एतद्व्यतिरिक्तदेवास्तत्तदंशा: सृष्टिकर्त्तार: सर्वेऽपि रुद्रांशा:। स्थितिकर्त्तार: सर्वेऽपि असिताङ्गांशा:। संहारकर्त्तार: सर्वेऽपि क्रोधांशा इति। एवं जगत्सृष्ट्यादिकं कृत्वा प्रलयानन्तरं निजसप्तमूर्त्तिसङ्कोचं कृत्वा एक: शाश्वत: संहारभैरव: परमात्मा वर्त्तते अत: सर्वदा अस्मन्मतस्य श्रेष्ठत्वात् सर्वैर्मैदाचार: परिग्राह्य: सर्वदा बोधोत्पन्ननित्यानन्दोऽहं वटुकनाथनामत: मच्छिष्योऽस्ति विश्वरूपविदितवेषविश्वरूपविदितरवादय: सर्वेऽपि सदा द्रव्यजनितबोधपरवशा: कापालिकशस्त्रलिङ्गेन तुष्टान्तरङ्गा: सङ्गमोद्भूतपरामृतपानपरा: पशुजनकल्पितस्वाराज्यादिसुखं तृणीकृत्य देहान्ते भैरव: पदमस्तीति निर्भया: सन्तो वर्त्तन्ते। एवमत्यन्तसन्तोषजनकमतममलकीर्त्तिविस्तृतं परित्यज्य मूर्खजना: श्रुतय: प्रमाणमिति पूर्वपक्षसिद्धान्तं नन्दिकेशविश्वकर्म्मादिदन्तशायाम्निभस्मायुतमवलम्ब्य घटीयन्त्रघटप्रचैरन्तर्थ्यजन्ममरणप्रवाहपतिता: कथं बोधं वहन्ति तस्मात् भवान् सन्न्यासी दण्डकमण्डलुधारी किल कर्म्महीन: कापालिकयोग्य एव अतो भवता स्वीकृते कापालिकमताचारे भवच्छिष्या: सर्वेऽपि तथैव भविष्यन्तीति प्राप्ते।

श्रीमदाचार्य्यस्वामिभिरिदमुच्यते किं मूढतम! जल्पसि सा ते श्रुति: भगवन्मुखगुहाविर्भूत पञ्चास्यैव विधिरहितमत्तमातङ्गजघिघांदृष्टा किलात: श्रुतिविरुद्धाचारतत्परान् युष्मान्निहन्तुमागमम्। मद्यमांसाशिनां ब्राह्मण्यहानिदर्शनात् मद्यपायिनस्तव भैरवपरवशेन किमागतं

असम्बद्धप्रलापिनं कापालिकमतगुरुं बहुस्त्रीपुरुषमर्य्यादाहन्तारं सर्वस्त्रीपुरुषसम्पर्कसञ्जातपापभागिनं दूषीकृतवेदशास्त्रादिप्रपञ्चं ब्राह्मणसमिद्दाहानलं ताड़यिष्यामीति शिष्यैस्तं सगणं ताड़यामास ततः कापालिकगुरुः सशिष्यान् परिताड़ितान् दृष्ट्वा सक्रोधमित्युच्चैः हुंकृत्याह यतीश्वरं एतावत्यामपश्चिकैरवध्यः सगणोऽहं भवता ताड़ितोऽस्मि मदुपास्यं संहारभैरवं मन्त्राविर्भूतं करोमि स तु त्वामचिरेण सगणं भक्षयिष्यतीत्युक्त्वा पुनर्हुमित्युच्चार्य्य वामहस्तेन नरकपालं धृत्वा तत्सुरापूरणं मन्त्रेण विधाय स्वयमर्द्धं पीत्वा अवशिष्टं शिष्येभ्यो दत्त्वा रक्ताक्षणलोचनः क्षणमध्यं पश्यन्निदमाह यः संहारकाले भैरवः प्रभुरीश्वरः स एवागत्य सन्यासिप्रभृतीन् भक्षय सत्वरमित्युच्चैस्तिरत्नमात्रेण खड्गकपालघण्टाशूलपाणिर्दिगम्बरो जटाक्षिप्ताम्बरः संहारभैरवः किलाविर्बभूव॥

संहारभैरवं नत्वा सन्यासीति किलाब्रवीत्।
स्वामिन्! वेदेषु शास्त्रेषु पुराणेषु च कर्म्म यत्॥
प्रतिपादितमस्तीह तत् कर्त्तव्यं हि धर्म्मतः।
विप्राणां कर्म्मणा धर्म्मः साध्यः स्यादिति मे मतम्॥
धर्म्मेण सर्वपापौघो नष्टं याति शुचिव्रतात्।
पापसङ्घे तथा नष्टे मनःशुद्धिः प्रजायते॥
शुद्धे मनसि सर्वात्मसाक्षात्कारो भवत्यलम्।
स एवमुक्तः सर्वेषां ब्राह्मणानां पुरःस्थितः॥
तद्भक्तः सहसावादि दुष्टयुक्तिपरम्पराम्।
एतन्नोचितमित्युग्रं भक्षिष्यैस्ताड़ितः स तु॥

आकरोदागतं त्वान्तु मन्त्रबीजपरायणः ।
इतःपरं त्वमेवैतत् सत्यासत्यं कुरु प्रभो ! ॥
इत्युक्तो भैरवः प्राह विप्ररक्षार्थमागतः ।
शङ्करस्त्वं सदा पूज्यः सर्ववेदपदार्थभाक् ॥
भवत्कृतं हि यत् कर्म्म मयापि च कृतं हि तत् ।
तेषां कापालिकानान्तु ब्राह्मण्याचारतां कुरु ॥
विकले तु कलौ प्राप्ते तेषां वृत्तिर्यथेप्सिता ।
बभूव मन्त्रबद्धोऽहं प्रत्यक्षोऽस्मि न धर्म्मतः ॥
इत्युक्त्वान्तर्दधे देवः कापालिकमतानुगाः ।
तद्वाक्यश्रवणाद्भीताः परिव्राट्कुलशेखरम् ॥
नत्वा द्वादशधा सर्वे वटुकाद्याः सुविस्मिताः ।
स्वामिन् ! मूढ़ा वयं यस्मात् पालयास्मांश्च सादरम् ॥
एवमालापिनो दृष्ट्वा करुणापूर्णविग्रहः ।
आज्ञापयामास यतिः शिष्यांस्तेषां विशोधने ॥
पद्मपादमुखाः शिष्याश्चक्रुस्तान् ब्राह्मणाध्वगान् ।
प्रातःस्नानरतान्नित्यं सन्ध्याकर्म्मदृढ़व्रतान् ॥
पञ्चपूजापञ्चयज्ञपरान्निश्चलमानसान् ॥

वटुकादयस्ते सर्वज्ञमूर्त्तिं परमगुरुमाश्रित्य सच्छिष्या बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ कापालिकमतनिवर्हणं नाम त्रयोविंशं प्रकरणम् ॥

---

# चतुर्विंशं प्रकरणम् ।



एवं निराकृते पुनरन्ये नानावर्णाः कापालिकचार्व्वाकसौगतक्षपणकजैनबौद्धाः प्रत्यवतिष्ठन्ते तत्र तावच्छूद्रजातिः उन्मत्तभैरवनामा कश्चन कापालिकः चितिभस्मपूर्णकलेवरः नरकपालमालावृतगलः फालदेशरचितकज्जलरेखः सकलकेशरचितजटाजूटो व्याघ्रचर्म्मरचितकटिसूत्रकौपीनः कपालशोभितवामकरः सनादघण्टाधृतदक्षिणकरः शम्भुभैरव अहो कालीश इति मुहुर्मुहुर्जल्पन् आचार्य्यस्वामिनमिदमब्रवीत् स्वामिन् ! किं कापालिकमते न्यूनतास्ति तदन्यत्र किं फलमस्ति वटुकनाथादिका भवद्भिस्तिरस्कृताः कापालिकमतभ्रष्टा बभूवुः तद्दूषणं ब्राह्मणजातित्वं न मे जात्या प्रयोजनं वर्त्तते अविवेकस्यैव जातिः कारणं ब्रह्मादिपिपीलिकान्तदेहस्य भौतिकत्वात् कस्य जातिर्वक्तव्या अनङ्गमयशरीरस्य चर्म्ममांसास्थ्यादिसप्तधातुमयस्य समत्वेनैव सर्वप्राणिषु वर्त्तमानस्य विशेषाविशेषत्वं भवद्भिः कल्पितं भैरवाज्ञया मातृयोनेरुत्पन्नस्य नीचोच्चवृत्तित्वं मन्दा अपि नाङ्गीकुर्वन्ति अतोऽस्माकं न हि प्रमाणं जातिः किन्तु जातिद्वयं दृश्यते स्त्रीत्वं पुंस्त्वञ्च तयोर्मध्ये स्त्रीजातिः श्रेष्ठा कथमित्युक्ते तत् संयोगेनानन्दभैरवनन्दनस्य विद्यमानत्वात् यदुक्तं श्रुत्यादिना भवद्भिः परदारान् न

गच्छेदित्यादिनिषेधवाक्यं तद्वयं नाङ्गीकुर्मः तस्याज्ञानविजृम्भितत्वात्। अस्मन्मताधिकारिणी या विद्या ते सा मदीयेव आनन्दग्रहणार्थं चर्म्मणश्चर्म्मसंयोगे कृते जीवस्य कोऽनर्थो भवति परास्तत्रस्मजीवस्य मोक्षदर्शनात् सार्थक एव देहपतनानन्तरं भैरवप्राप्तिरेव मोक्ष इति प्राप्ते श्रीमदाचार्य्यः पठति।

भोः कापालिक! समाधीनमुक्तं भवता इदमेकं सत्यं वद भवन्माता कस्य पुत्रीति नियमितः कापालिकः पुनराह स्वामिन्! मदीयमाता दौक्षितपुत्री तद्दौक्षितत्वं कथमित्युक्ते तालादिवृक्षगतां सुरामाहृत्य हस्तग्रहणादिना तदानन्दमिच्छुरपि स्वयं न पिबति किन्तु तद्विक्रयणशीलः तस्माद्दौक्षित इत्युच्यते तस्य पुत्रिका मम माता आनन्दानुभवाय आगतान् पुरुषान् निजाङ्गसमर्पणानन्दसमुद्रमग्नान् सदाकरोत् तत्सुतोऽहमुन्मत्तभैरवनामा दिने कमण्डलुसुरापानचमत्कारसम्पन्नस्यैवमेव प्रसिद्धेः मत्पिता कुलालः तदग्रे देवा अपि न तिष्ठन्ति सुरागन्धविमुखाः पलायन्ते अतः पितृतः समागतः सत्कुलप्रसूतोऽहं भवद्भिरपि न विचारणीय एवेत्यालापिनं परमपुरुष इदमाह गच्छ कापालिक! यथासुखं विहर ब्राह्मणानेव दुष्टमतावलम्बिनो दण्डयितुमस्मद्गमनं तदितरेषामप्यग्रजपादसेवनादिवृत्तिस्तदाचारानुसरणञ्च प्रशस्तमपि भ्रष्टस्य तव किं मानमित्युक्त्वा एष उच्चाटनीय इत्याचार्य्यवचनं शिरसा परिगृह्य तच्छिष्याः कशाघातपुरःसरं मदिरापानमत्तं कापालिकं दूरमत्यजन्।

इत्यनन्तानन्दगिरिकृतौ कापालिकैकदेशिमतनिवर्हणं नाम चतुर्विंशं प्रकरणम् ॥

---

## पञ्चविंशं प्रकरणम् ।

—::०::—

ततश्चार्वाकः प्रमथैः शङ्करमिव बहुशिष्यवरैराश्रितं लोकगुरुं श्रीशङ्कराचार्य्यं दृष्ट्वा किमेतत् जगन्मूर्खजनाक्रान्तं विचित्रमिव जातं किमत्रा देहेन्द्रियातीतशून्याद्यवादिनः असन्तस्तेषां मुक्त्यभावादेव लोके किल विकला इव बहवो जाता मूढतराः तेषां सङ्गवशेन बुद्धिमतामस्माकमपि दुष्टमतिरायातीति बहुधा विचार्य्य अथैवं तदग्रणीसन्न्यासीति कश्चिदस्ति खलु तस्य यदि विवेकोऽस्ति तदा तदग्रे क्षणं स्थास्यामि नो चेत् शीघ्रमागच्छामीति च सभां प्रविश्य इदमुवाच स्वामिन्! यदि भवता परमार्थो विदितस्तर्हि मुक्तिलक्षणं वद तावत् मद्विवेकः श्रूयतां पितृमातृकारणस्य कार्य्यरूपशरीरस्येन्द्रियप्राणजीवात्मकस्य लय एव मोक्षः मन्दमतयस्तस्य पुनरागमने जल्पन्ति, भस्मीभूतस्य देहस्य पुनरागमनं कुतः, शक्यं वक्तुं यदि समुद्रलीनानां सरिदम्भसां पुनरागमनमस्ति चेत् तदामृतिं गतानामपि पुनरागमनमायाति। अतो मृतिरेव मुक्तिरिति निरवद्यं केचिन्मन्दधियः किल मृतानां श्राद्धं कर्म्म कुर्वन्ति तदन्नेन मृतानां तृप्तिरस्तीति तद्विवेकः किमु वक्तव्यः. किञ्च स्वर्गनरक-

रूपः परलोकोऽस्ति तत्र सुखदुःखानुभवो मृतानामस्त्येव पुण्ये पापे वा क्षीणे देहिनः मर्त्यलोकप्राप्तिरिति केचिज्जल्पन्ति तन्मतं सुतरामप्रामाण्यं इहैव स्वर्गनरकानुभवस्य विद्यमानत्वात् यो वा सुखभुक् स एव स्वर्गस्थः यो वा क्लेशभुक् स एव नरकस्थ इतिप्रत्यक्षदृश्यस्वर्गनरकरूपफलस्य परोक्षस्थितिर्न हि कल्पयितुमुचिता भूतेषु भूतानां तत् कार्येन्द्रियाणाञ्च नष्टत्वात्तेषां परलोकगमनमनर्थकं किन्तु जीवस्येति चेन्न तस्य स्वरूपाभावात् रूपाभावस्य जीवस्य कथं गमनं वक्तुमुचितं यदि घटाकाशस्य गमनमस्ति चेत् जीवस्यापि गमनं वक्तुं शक्यं वृक्षाद्वृक्षाग्रं गतस्य पक्षिण इव जीवस्येति चेन्न स्वरूपस्य पक्षिणस्तथागमनमुचितं नीरूपस्य जीवस्य वक्तुमशक्यत्वात् तस्मादस्मन्मतमेव युक्तमिति प्राप्ते ।

श्रीमद्भिरिदमुच्यते भोश्चार्वाक ! भवदुक्तं नार्हं वेदविरुद्धत्वात्तावज्जीवो देहेन्द्रियेभ्यो भिन्नः स एवास्माभिः परमात्मेत्युच्यते स एव सर्वभूतान्तःकरणेषु वर्त्तमानः साक्षी कूटस्थ इत्युच्यते अन्तःकरणवृत्तौ कूटस्थस्यैव प्रतिफलनं जीव इति प्रसिद्धिः । यदा शुद्धान्तःकरणं लिङ्गशरीरग्रन्थिच्छेदं करोति तदा जीवस्य जीवत्वभ्रान्तिविच्छित्तिः सैव मोक्ष इति निश्चयस्य सर्ववेदवचनसम्यगर्थतात्पर्य्यसिद्धेः देहपतनमेव मोक्ष इति कथमुक्तं भवता ज्ञानशून्ये मोक्षस्याभावात् । ज्ञानाग्निदग्धकर्म्माणो यान्ति ब्रह्म सनातनमितिश्रुतेः । भौतिकदेहे अग्निना दग्धेऽपि स्थूलाख्ये सूक्ष्मकलेवराख्यलिङ्गदेहावृतः परत्र याति

जीवितस्य स्वर्गनरकयोः पुण्यपापानुभोक्तृता भवता उक्तैव। ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रुतेः इहलोकाद्देहात् परलोकं तदनुकूलदेहञ्चेत् जीवस्य जलौकावत् पूर्वग्रहणादेव परालम्बनमतीन्द्रियविज्ञैरुदाहृतं श्रुतिश्च तृणजलौका तृणस्यान्तं गत्वान्यमाक्रम्य आत्मानमुपसंहरति पूर्वतृणं मुञ्चति स एव जीवो देहाद्देहान्तरं याति परलोकं स गच्छतीति तत्पुत्रादिना मृतोपाधिस्थस्य जीवस्य श्राद्धादिकर्म्म कर्त्तव्यं तेन तस्य प्रेतत्वनिवृत्तिः पुण्यलोकावाप्तिश्च भवत्येव गयादिपुण्यस्थलेषु पिण्डदानान्मुक्तिरस्तीति पुराणदर्शनात् जीवस्य स्वरूपाभावात् कथं परलोकगमनमित्युक्तं जीवस्य लिङ्गशरीरमेव रूपं इदं सप्तदशावयवात्मकं लिङ्गं मदीयमित्यभिमानतो विशेषादात्मुक्तेर्लिङ्गस्यस्य अन्तःकरणवृत्त्यन्तः प्रतिफलितत्वात् सगुणता कल्पनीया तावदज्ञोऽहं जीवोऽहं कृशोऽहं स्थूलोऽहं सुख्यहं दुःखी अहञ्चेति स एव मन्यते अतः सगुणत्वात् पक्षिवत् लोकाल्लोकान्तरगमनमुचितमेव सिद्धान्तितम्। तस्मात् चार्वाकमूढ़! पापाचार! तूष्णीं गच्छेत्युक्तः स तु वेषभाषादिकं परित्यज्य श्रीमदाचार्य्यगुरुपादपद्मद्वयं नत्वा तत्पुस्तकभारभरणोद्युक्तगोपालकोऽभवत्॥

इत्यनन्तानन्दगिरिकृतौ चार्वाकमतनिवर्हणं
नाम पञ्चविंशं प्रकरणम्।

---

## षड्विंशं प्रकरणम्।

—※—

ततः पीनकलेवरः सूक्ष्मशिरस्कः सौगतः श्रीशङ्करगुरुं नत्वा इदमुवाच स्वामिन्! जगदिदं व्यत्यस्तमासीत् सर्वेऽपि दुर्बोधवशात् कर्म्मशीला इव भान्ति किं कर्म्मणा भौतिकदेहस्यास्ति सृष्टिस्थितिलयं विना तादृक्शरीरस्य भौतिकरूपस्य स्नानेन किं शुद्धतास्ति जीवस्तु निर्म्मलो देहपातानन्तरं मुक्तः तयोरन्तरं वेत्ति चेत् कथं वा स्नानध्यानाच्छुद्धिरस्ति अतो निरर्थकत्वात् स्नानादि कर्म्म न कार्य्यं किन्तु ऋणवशाज्जीवः पुनर्जातो भवतीति केचिन्मूर्खजना जल्पन्ति तन्न सत् देहादृष्टप्राप्तधनस्य कथमृणता वस्तुमुचिता द्रव्य लब्धघृतादिभक्षणेन देहपुष्टेर्विद्यमानत्वात् पुष्टशरीरस्यैव तुष्टजीवकारणत्वात् अतो ऋणं कृत्वा घृतं पिवेदिति वचनस्य प्रामाण्यात् तत्त्वविदा पुष्टशरीरिणा भवितव्यं देहान्ते ऋणाभावात् तस्मात् तत्र तत्र ऋणं कृत्वा समग्रभक्षणशीलस्य सुखप्राप्तिरेव मोक्षसाधनं तदन्ते मोक्षः करस्थ एवेति प्राप्ते।

श्रीमद्भिरिदमुच्यते किं सौगत! जल्पसि देहपातानन्तरं जीवस्य मोक्ष इत्युक्तं तदसत्यं परलोकागमनदर्शनात् तत्र सुखदुःखानुभवस्य श्रुतिसिद्धत्वात् अन्यथा वस्तुमनुचितं स्मृतिश्च क्षीणे पुण्ये मर्त्यलोकं विशन्तीति अनेन परलोके लिङ्गशरीरबद्धजीवस्य सुखदुःखानुभवसिद्धोऽभूत् अतः परलोकादागत्य यस्य वा ऋणं दातव्यं यस्य वा द्रव्य-

मपहर्त्तव्यं तद्गर्भे तस्य जन्म भवत्येव तस्मात् अज्ञानबुद्धिं पापपङ्कलिप्तां परित्यज्य सन्मार्गगामी भवेत्युक्तः पुनराह ।

स्वामिन् ! सुगतमुनिः चतुःसमुद्रान्तां भुवं दृष्ट्वा विस्मयाविष्टमानसः सत्यमेतदिति जगद्विचार्य्य सर्वप्राण्युपासकोऽभवत् स तु मदुपदेशकाले करुणावशात् इदमाह सर्वप्राण्यहिंसा परमो धर्म्मः तादृग्विधधर्म्मेणैव कपालनिवृत्तेर्मुक्तो भवसीति तदारभ्याहमपि गुरुवाक्यं शिरसा परिगृह्य तत्पादध्यानासक्तः सर्वप्राणिषु दयापरोऽस्मि तदन्यो धर्म्मो नास्त्येव लोके किन्नातः परम मतमस्मदीयं धर्म्मस्थानं भवदादिभिः सर्वैरङ्गीकरणीयमिति पुनः सौगतमते प्राप्ते ।

परमगुरुभिरिदमुच्यते रे रे सौगत नीचतर ! किं किं जल्पसि अहिंसा कथं धर्म्मो भवितुमर्हति यागीयहिंसाया धर्म्मरूपत्वात् तथाहि अग्निष्टोमादिक्रतुः छागादिपशुमान् यागस्य परमधर्म्मत्वात् सर्वदेवतृप्तिमूलकत्वाच्च तद्द्वारा स्वर्गादिफलदर्शनाच्च पशुहिंसा श्रुत्याचारतत्परैरङ्गीकरणीया तद्व्यतिरिक्तस्यैवं पाषण्डत्वात् तदाचाररता नरकमेव यान्ति ।

वेदनिन्दापरा ये तु तदाचारविवर्जिताः ।
ते सर्वे नरकं यान्ति यद्यपि ब्रह्मवीजजाः ॥

इति मनुवचनात् ॥

हिंसा कार्त्तव्येत्यत्र वेदाः सहस्रं प्रमाणं वर्त्तते ब्रह्मक्षत्रवैश्यशूद्राणां वेदेतिहासपुराणाचारः प्रमाणमेव तदन्यः पतितो नरकगामी चेति सम्यगुपदिष्टः सौगतः परमगुरुं

नत्वा निरस्तसमस्ताभिमानः पद्मपादादिगुरुशिष्याणां पादरक्षधारणाधिकारकुशलः सततं तदुच्छिष्टान्नभक्षणपुष्टतनुरभवत् ॥

इत्यनन्तानन्दगिरिकृतौ सौगतमतनिवर्हणं नाम षड्विंशं प्रकरणम् ॥

---

## सप्तविंशं प्रकरणम् ।

——:०:——

ततः क्षपणकः कौपीनमात्रधारी गोलयन्त्रतुरीययन्त्रञ्च कराभ्यां धृत्वा समागत्याचार्य्यस्वामिनमिदमब्रवीत् । भोः स्वामिन् ! मदीयमतमतिविचित्रं शृणु । क्षपणकः पूर्णसमयनामाहं कालजनकं सूर्य्यं गोलेन तुरीयेण यन्त्रेण वा बध्वा समयज्ञानेन स्वर्गमर्त्यपातालस्थलव्यालव्यशुभाशुभं वच्मि । किञ्च काल एव परमदेवता । मत्पक्षं चलयितुं ईश्वरोऽपि न समर्थ इति जल्पन्तमाचार्य्यः प्रत्युवाच ।

भोः पूर्णसमय ! समीचीनमुक्तं भवता त्वं कालवित् किल तथैवाहमपि तस्मान्मदाश्रयेणागच्छ यत्र भवत्परीक्षोचितकालागमनं तदानीं त्वां पृच्छामीत्युक्तः स तु तथैवास्त्विति तं सर्वदाश्रित्य सिद्धसङ्कल्पोऽभवत् ।

ततो जैनः कौपीनमात्रधारी मलदिग्धाङ्गः सदाऽर्होऽर्हन् इति मुहुर्मुहुरुच्चैरुच्चरन् शून्याङ्कः शून्यपुण्ड्रधृतविन्दुपुण्ड्रः शिष्यसमेतः पिशाचवत् सर्वजनभयङ्करः समागत्य सकललोकगुरुमिदमुवाच । भोः स्वामिन् ! मदीयं मतमत्य-

त्समुगमं श्रूयताम् । जिनदेवः सर्वेषां किल मुक्तिदः जीति पदवाच्यस्य जीवस्य नेतिपदेन पुनर्भव इति स एव दिव्यत इति देवः सर्वप्राणिहृत्पुण्डरीकेषु जीवरूपेण व्यवस्थित इति ज्ञानमात्रेण देहपातानन्तरं मुक्तः तस्य नित्यमुक्तिरूपत्वात् तेन करचरणादिसाधनद्वारा यद्यत् कर्म कृतं तत् सत्यं तस्य तदधीनत्वात् । अतो जीवः शुद्धः देहस्तु मलपिण्डः स्नानादिना तस्य शुद्ध्यभावात् वृथाप्रयोजनं स्नानादि कर्म न कार्य्यमिति प्राप्ते ।

श्रीपरमगुरुः पठति । भो ! जैन ! किमुक्तं भवता मूढतरेण जीवस्य देहनिवृत्तिरेव मुक्तिरिति निष्प्रयोजनत्वात् स्नानादि कर्म न कर्त्तव्यमिति च तदयुक्तं कथं जीवस्य देहत्रयं विद्यते । स्थूलसूक्ष्मकारणभेदात् । स्थूलस्य लक्षणन्तु पञ्चीकृतपञ्चमहाभूतस्वरूपं तच्चतुर्विंशतितत्त्वात्मकम् । सूक्ष्मस्य सप्तदशात्मकत्वं लक्षणं एकादशेन्द्रियपञ्चमहाभूतबुद्धिसंख्याकम् । कारणन्तु अज्ञानमात्रं तेषां लयस्तु स्थूलस्य सूक्ष्मे तस्य कारणे कारणस्य सगुणे निर्गुणे परमात्मनीति तत्तदधिपतिविशिष्टानां देहानामेवं लये सच्चिदानन्दलक्षणलक्षितः परमात्मा जीव एव स्यात् जीवः परमात्मैव । तथा भेदभ्रमनिवृत्तौ मुक्तिरिति निरवद्यम् । ननु प्रत्यक्षदृष्टाच्छरीराच्छरीरान्तरकल्पना निरर्थका तत्सत्तामात्रे प्रमाणाभावात् । यद्यस्ति तर्हि जीवस्य शरीरत्रयसञ्चारो वक्तव्यः । मनःकल्पिते स्वप्ने गङ्गा मया दृष्टा हिमवान् मया दृष्ट इति च प्रत्ययोऽस्ति । देहादात्मनोर्निर्गमनस्य युक्तत्वात् । कारणशरीरत्वे मनसः कल्पिते जीवस्यापि निर्गम-

नमेव वक्तव्यम् । निर्गमिते जीवे पुनःप्राणाभावात्तत्प्राणनन्त-रमेव मरणप्रसक्तिः। चतुर्विंशतितत्त्वेष्वेव लिङ्गस्यान्तर्भा-वात् तत्कल्पना व्यर्था भूतजातीन्द्रियाणां तद्रूपत्वात् । अतोऽनया क्लिष्टकल्पनया न हि किञ्चित् प्रयोजनमस्ति । तस्मादेको देहः प्रति जीवस्य तत्पातानन्तरं जीवस्य मुक्ति-रिति प्राप्ते ।

श्रीमद्भिरिदमुच्यते । जैन मूढतर ! तत्त्वं न श्रुतवा-नसि । पञ्चीकृतभूतैः पञ्चविंशतिसंख्या जाता तया त-त्त्वानाञ्चतुर्विंशतिरभवत् पञ्चविंशतिसंख्याकस्य ज्ञानरूप-त्वात् । न हि चतुर्विंशत्या देहसिद्धिर्भविष्यति अपञ्चीकृत-पञ्चभूताभावात् । अतः पञ्चीकृतैरपञ्चीकृतैश्च भूतैर्देहसि-द्धिर्वक्तव्या अतः स्थूलापेक्षया लिङ्गशरीरमङ्गीकृतं स्थूलश-रीरस्य पातानन्तरं जीवे सूक्ष्मशरीरासक्ते परलोकगमना-रम्भः प्रसज्यते । अरूढस्य पुरुषस्य तु शीर्णे लिङ्गे सर्वं मन-स्येवाध्यस्तं भवति । तच्छुद्धं मनस्तु जाग्रदाद्यवस्थाख्या-भिख्यो विश्वतैजस प्राज्ञेभ्यश्चोपरिविराजमानमङ्गुष्ठमात्रं सर्वजगत्प्रभुं मनोऽमनाख्यमधिगच्छति । स एव कारण-शरीरलय इति प्रसिद्धः । एवं नष्टे शरीरत्रये सगुणनिर्गुणो-भयात्मको मनोऽमनः परमात्मनि लीनो भवति स एव मोक्ष इति सर्वैरतीन्द्रियविज्ञैरुदाहृतः, एवमत्यन्तदुःसाध्यस्य मोक्षस्य न हि देहपातात् प्राप्तिः सम्भवतीति सिद्धान्तः । एवं श्रीमद्भिरुक्तो जैनः शिष्यैः सह स्ववेषभाषावियुक्तः पर-मगुरूणां प्रतिदिनं तण्डुलादिवस्त्वाकर्षणशीलः वणिग्-जनोऽभवत् ।

इत्यानन्तानन्दगिरिकृतौ जैनमतनिवर्हणं नाम सप्तविंशं प्रकरणम्।

---

# अष्टाविंशं प्रकरणम्।

—०:०—

एवं निराकृतेषु कापालिकचार्वाकसौगतक्षपणकजैनेषु बौद्धः किल शवरनामा प्रबलः प्रत्यवतिष्ठते। किं स्वामिन्! सर्वोत्तम इव वर्तसे तव ज्ञानेन किमद्वैतफलमस्ति तस्य शशविषाणवदत्यन्तासत्त्वात् दृष्टफलं परित्यज्यादृष्टफलाभिलाषी कथमसि। प्रत्यक्षद्रोहिणस्तव परोक्षेऽपि फलाभाव एव भविष्यति सर्वशून्यस्य परोक्षस्य फलदानासमर्थत्वाज्जीवत्वाच्च। यस्तु जीवशब्दवाच्यं चैतन्यं किल लोके सर्वप्राणिषु वर्त्तते स तु एकोऽपि बहुरूपाणि धृत्वा हृदयादिप्रेरको भूत्वा नित्यमुक्तस्वरूपः कर्ताहं भोक्ताहमदृश्यः परमानन्दोऽहमिति मन्वानः स्वाभीष्टं यावत् तावद्देहेषु क्रीडन् पश्चान्मुक्तो भवति देहं परित्यज्येति बौद्धोक्तः श्रीपरमगुरुः प्रठति।

भोः शवर! अनर्हं भवता प्रतिपादितं कथमत्यन्ताविकृतत्वात् तस्य मोक्षः कथं देहपातानन्तरं परलोकगमनदर्शनात्।

तथा हि पुराणे। सत्यशौचरतो यस्तु देवतातिथिपूजने।
स याति ब्रह्मणो लोकं यावदिन्द्राश्चतुर्दश॥

अग्निष्टोमं देवप्रीतिदं कुर्य्यादस्मादिन्द्रलोकं हि याति

सत्याख्यः सत्यौकलोकाश्रयाति याति तत्तद्देवोपासकास्त-त्तद्देवमिति।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥ इति।

भगवद्गीतावचनात्।

इयं देवता मदीयोपासनया तुष्टा देहावसानान्ते लोकनिवासं दास्यतीति प्रमाणप्रतत्त्य विद्यमानत्वात् जीवस्य देहपातानन्तरं लोकान्तरगमनमस्तीति सिद्धमेव परमात्मा सर्वदेवरूपः सर्वलोकद इति प्रसिद्धम्। यो देव यस्याभीष्टः तल्लोकदः स एवात्मा एकोऽद्वितीय इति सिद्धम्। अतो देहपातानन्तरमेव मुक्तिरिति सुतरामयुक्तं ज्ञानमृते मुक्त्यभावदर्शनात्। ज्ञानस्य किं वा लक्षणमित्युक्ते सर्वभूतानि स्वस्मिन् सर्वभूतेषु आत्मा पुरुषो मुक्त इति प्रसिद्धेः।

तथाच श्रुतौ, सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
सम्पश्यन् ब्रह्म! परमं याति नान्येन हेतुना॥ इति।

तस्माच्छबर! मूढबुद्धिं परित्यज्य स्वस्थो भवेत्युक्तः शब-रनामको बौद्धः श्रीमदद्वैतसिद्धान्तिनं शङ्करनामानं परम-गुरुं नत्वा तत्कीर्त्तिस्तवपरो वन्दिमागधसूतवेषधार्य्यभवत।

इत्यनन्तानन्दगिरिकृतौ बौद्धमतनिबर्हणं नाम
अष्टाविंशं प्रकरणम्।

---

# एकोनविंशं प्रकरणम् ।

——::*::——

तस्माद्वायुदिशि प्रसिद्धमखिलैः शिष्यैः समेतः परः
प्राप प्रोद्यद्दिनाभमूर्त्तिरनुमल्लाख्यं हि सत्पत्तनम् ।
स्थित्वा तत्र दिनैकविंशतिमथैवान् वीक्ष्य तत्राश्रितान्
किं विप्रा ! वदत प्रभातसुखकालेऽत्यममार्गोद्गतम् ॥

जगद्गुरुभिराचार्य्यैरेवमुक्ताः पौराः किल नत्वेदमूचुः स्वामिन् ! मल्लप्रशस्तेरागतमिदं लक्षणं यः परमेश्वरो मल्लासुरहरः प्रसिद्धो मल्लारिरिति लोके वर्त्तते तन्मूर्त्तिः किलात्रैवाविर्भूता जगदुत्पत्तिसम्पत्तिकारकं नाममुद्रितं संपूज्य तद्वाहनकुक्कुरनववेषभाषादियुक्ता वयं कपर्द्दयुतकपर्दिकामालिकाङ्गाः शङ्खाधीनाः त्रिकालनामसङ्कीर्त्तनादिभिर्मल्लारिं प्रीतं कृत्वा वसामः तत्प्रसादजनितानुदिनवर्द्धमानानन्दपरवशाः सर्वजगन्मल्लारिगर्भकोटरान्तर्गतमिति ध्यानात् मल्लारेस्तदतिरिक्तं किञ्चिदपि नेच्छामः तस्यैव सर्वात्मकत्वाच्च । किञ्च वेदेषु मल्लारिणः सर्वव्यापकत्वं वर्त्तते तद्वाहनस्यापि वेदविहितत्वात् तद्वेषभाषासक्तानामस्माकं नह्यन्येच्छा तथा हि श्रुतिः । श्वभ्यः श्वपतिभ्यश्च वो नम इति । अतः श्रुतिप्रसिद्धाचारस्य दुर्निवार्य्यत्वात् त्वमपि सशिष्यः परममुक्तिकारणमस्मदाचारानुग्रहणं कुरु भण्डारणयोग्यानि वराटकानि दास्याम इति प्राप्ते ।

श्रीमदाचार्य्यैरिदमुच्यते किं मूढतम ! ब्रवीषि मल्ला-

रिकारणवादित्वं कथं घटते वेदविरुद्धत्वात् यतः परमात्मा एकोऽद्वितीयः सर्वसाक्षी सर्वकारणं सदेव सौम्येदमग्र आसीदित्यादि श्रुतिप्रतिपादितः तद्ब्रह्माखिललोककर्त्ता तदिच्छारूपया प्रकृत्या महदादिकारणं जगत् असृजत प्रकृतिगर्भजाताः ब्रह्मविष्णुरुद्रा सृष्ट्यादिकर्त्तारः किल तदन्ये ये देवाः तत्तद्गुणानुकूलत्वात् तदंशा एवेति प्रसिद्धाः यत्र कुत्र वा लयकारणे प्राप्ते रुद्रांशा वीरभद्रा भैरवाद्यो बहवः सन्ति तेषां ध्यानेन मुक्तिरिति वक्तुं न युक्तमिव भाति मुक्तेर्जीवेशभिदाविरहकारणत्वात् किञ्च श्ववाहनारूढस्य मल्लारिनाम्नो रुद्रांशस्य वेदप्रतिपादितत्वात् तन्मतमङ्गीकर्त्तव्यमिति किल भवतोक्तं यदि तदपि प्रौढ़तरम्। एकादशरुद्राणां स्तवमारभमाणेनानेन कथं मल्लारिस्तुतिः कृता श्वपतिभ्य इत्यत्र रुद्रत्वाद्बहुवचनमुक्तं ननु पूजायां बहुवचनमिति न्यायेन मल्लारिभ्यः श्वपतिभ्य एव नम इत्यर्थः। पूर्ववाक्ये श्वभ्य इति तद्वाहननमस्कारस्य विद्यमानत्वादिति यद्युच्येत तदङ्गीकर्त्तव्यं रुद्राणां जगद्व्यापकत्वं प्रतिपादयितुं श्वभ्यः श्वान्तर्गतरुद्रेभ्यो नमः श्वपतयः श्वावशवलादयो वैवस्वतवंशसम्भवाः अथवा श्वपतयः श्वविक्रमार्ज्जितमांसादिभुजः अथवा श्वपतयः चाण्डालाः श्वमांसभक्षणशीलाः तेषां विविधानां हृदयव्यापकेभ्यः रुद्रेभ्य इति निरवद्यम्।

किञ्च शुनां निकृष्टजन्तुत्वात् पापरूपत्वाच्च तदीयस्पृष्टा मृत्तिकास्नानस्य ब्राह्मणानां सिद्धत्वात् तद्वेशभाषाचिह्नं कथं भवद्भिर्धृतं तस्मादस्य प्रायश्चित्ताभावान्नवदाचरित-

त्रिकालस्नानादितत्क्रियाचरणेन लुप्त सन्ध्यादिनित्यकर्मणः प्राप्तदोषस्य किं प्रायश्चित्तं वक्तव्यं एवं वंशप्रख्यापयित- भवदुक्ता ब्राह्मण्यस्य निरवकाश इव प्रसक्तः। तस्मात् भवन्मुखनिरीक्षणेन सूर्य्यावलोकनस्य विधिबोधितत्वात् इतःपरं मौनमेव कर्त्तव्यमित्युक्ताः मल्लारिपः परमगुरुच- रणारविन्दसमीपे छिन्नमूलतरव इव महाराजसमीपे कृता- पराधिन इव निपतन्। दयारसाभिषिक्तगुराचार्य्य- स्वामी समीक्ष्य तान् तिष्ठध्वमित्युक्त्वा तेषं पापविशोधनं कर्त्तुमत्यन्तनिपुणानखिलज्ञान् स्वशिष्यान् पद्मपादहस्ता- मलकमुखान् आज्ञापयामास। ते किल तेषां शिरोमुण्डनं महानद्यां प्रयुतस्नानं मुण्डनाहारनियमनं पुनर्मु- ण्डनं शतकृत्तिकास्नानं प्रायश्चित्तं सङ्कल्प्य ब्रह्मकर्म यथा- विधि कृत्वा ब्राह्मण्यमार्गगतानाचक्रुः। तत्पुरब्राह्मणाश्च परमगुरूणां मुख्यशिष्याः स्नानादिसत्कर्मशीलाः पञ्चपूजा- रताः शास्त्राध्ययनपरा बभूवुः॥

इत्यनन्तानन्दगिरिकृतौ मल्लारिमतनिबर्हणं नाम एकोनत्रिंशं प्रकरणम्॥

---

## त्रिंशं प्रकरणम्।

---

तस्मात्पुरात्पश्चिममार्गगामी मरुन्धसंज्ञं पुरमाप शिष्यैः। ढक्कादिवाद्यानुचलत्करीचैर्विचित्रवन्द्यादिबहुप्रपन्नैः॥

तत्र पुर्य्यां विचित्रं विष्वक्सेनगोपुरपूर्वभागे विपुलत-

रायां शशाङ्कालायमन्तर्हृदिकल्पनां कृत्वा तत्र देवगृहे श्रीमदाचार्य्यः सम्यगुद्भासमानः सन् मनोमनाख्यमङ्गुष्ठमात्रलक्ष्यं पूर्णचन्द्राकारं परमात्मानं समीक्ष्य तन्निस्यन्दपीयूषबिन्दुसन्दोहपानलसत्सर्वाङ्गः कुण्डलिनीं पुनर्मूलाधारं नीत्वा तदधीशं गणपतिं स्तुत्वा सुखं विरराम। तत्र विष्वक्सेनपरायणाः शङ्खचक्रचिह्नविराजद्भुजदण्डतोरणायः श्रीगुरुस्वामिनं नत्वेदमूचुः। स्वामिन्! मदीयं मतमत्यन्तपुण्यदं विष्वक्सेनाधिदैवतं स तु किल वैकुण्ठवासिनो भगवतो द्वितीयावतार इव सकललोकनियन्ता वर्त्तते। तस्य भक्ता वयमनिशमावसामः वैकुण्ठे नित्यमुक्ताः खलु वास्माकं शमादिभिरस्ति देहपातः। तदुपासनेन वैकुण्ठलोकप्राप्तिरिति वयं तमुपास्महे। भवद्भिरपि तदुपासना क्रियतेति शास्मे।

आचार्य्यैरिदमुक्तम् भवन्मतमयुक्तम्। वेदबाह्यत्वात् तत्कथं नारायणकाण्डेषु श्रुतिप्रकरणेषु सर्वेषु विष्वक्सेनस्यानुक्तत्वात्। भगवद्भक्ता वैकुण्ठे बहवो वर्त्तन्ते भगवद्दर्शापरैरेव तद्भक्तानाञ्च किञ्चित् प्रसादलवो दातव्य इत्यनुज्ञामात्रेण कथं तेषामुपास्यत्वमासीत् तथाकर्त्तव्ये प्रामाणाभावात्। तदीयस्य नारायणस्योपासनन्तु तल्लोकेप्सुभिः कर्त्तव्यम्; तस्य सगुणत्वात् परम्परया मुक्तिद इति प्रसिद्धेः न तु साक्षान्मुक्तिप्रदः तमेवाखण्डरूपेण सर्वजीवैक्यभावनविशेषेण ध्यानतोऽस्य साक्षान्मुक्तिरिहैवेति यूयं मुक्तिकाङ्क्षिणश्चेत् अखण्डमद्वितीय सर्वव्यापिनमात्मानं सर्वगुणातीतं श्रीगुरूपदेशाज्ञस्यद्वारा ध्यात्वा मुक्ता भवथे-

त्युपदिष्टाः त्यक्तलिङ्गाः परमगुरुचरणारविन्दद्वन्द्वं उत्तमाङ्गेर्नत्वा शुद्धाद्वैतविद्यां तदुपदेशेन प्राप्य पञ्चपूजापराः स्मार्त्तश्रौतसकलकर्म्मशीला बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ विष्वक्सेनमतनिवर्हणं नाम त्रिंशं प्रकरणम् ।

---

## एकविंशं प्रकरणम् ।

एवं परिहृतेषु विष्वक्सेनमतेषु पुनस्तत्रस्था एवान्ये विष्णुसुता इति प्रसिद्धाः मन्मथोपासनानिरताः क्रौञ्चविक्रामविद्विद्याविदित्यादयः पुष्पधनुर्लक्ष्मशोभितबाहुयुगाः परमगुरुं नत्वेदमूचुः । स्वामिन् ! अस्मन्मतं शृणु सर्वजनमनोरञ्जनहेतुभूतं मन्मतेशो मन्मथः सर्वप्राणिहृदन्तर्वर्त्तिपरमात्मा स एवोत्पत्तिकारणं यस्योत्पत्तेरीशत्वं तस्यैव स्थितिसंहारयोरपीति जगदुपादानकारणत्वे सिद्धे सर्वैर्मुमुक्षुभिः स एक एव उपासनीयः नराणां समूहो नारं तस्मिन् अयनं यस्य स नारायणः मन्मथः तस्य सर्वदातृत्वे समर्थतास्तीति तत्स्तुतिं कृत्वा मोक्षप्रदोऽपि स एवेति सम्यगुक्तं तस्मात् धर्म्मार्थकाममोक्षप्रदातृत्वं तस्य सिद्धं तस्य वसन्तोत्सवादिषु भूषणानि मदनतेजो विजृम्भितं नित्यानन्दतरङ्गं नाम भूषणं हृदयदेशे वर्तुलाकारभूषणद्वयं वशीकृतत्रैलोक्यस्त्रीकदम्बकं यदस्ति तदीयदर्शनस्पर्शनाभ्यां निरवधिकानन्दस्य प्राप्ताखण्डानन्दस्य भगवद्रूपत्वे न तत्प्राप्तिरेव मोक्षः अतो मोक्षकाङ्क्षिणो यूयमपि मन्मथोत्-

शवभूषणपुष्पवनुश्चिह्नानि धृत्वा तज्जनितनिरवधिकानन्दप्राप्तिमन्तो मुक्ता भवथेति प्राप्ते श्रीपरमगुरुभिरिदमुच्यते ।

भोः क्रौञ्चविदादयः भवदुक्तमसमञ्जसं कथं प्रमाणाभावात् । तावन्मन्मथस्य सृष्ट्यधिकारः कथं सम्भावनीयः ब्रह्मण एव सृष्टिकर्तृत्वदर्शनात् तथैव स्थितिलयकर्तृत्वाभावः विष्णुशिवावेतत्कर्तारावितिं प्रसिद्धेः । मन्मथस्य नारायणपुत्रत्वात् स्थित्यधिकारः तस्यापि वक्तुं शक्यते इति यद्युच्येत तदसमञ्जसम् । पुत्रे पितृशक्त्यभावदर्शनात् यथा सूर्यपुत्रे शनैश्चरे सूर्यप्रभाद्यदर्शनात् न तु वसन्तोत्सवकालसम्पादितविशेषभूषणधारणं कर्तव्यं तल्लोकश्चितयविद्यमानस्त्रीवशं करोतीति यदुक्तं तत् किं प्रमाणं स्त्रीणां तत्सङ्गिनां सङ्गं दूरतः परिवर्ज्जयेदिति निषेधदर्शनात् किञ्च मन्मथस्य स्त्रीपुरुषमोहकारकशक्त्यभावात् तदुपासनं व्यर्थं कथं रुद्रकालाग्निना भस्मीभूतस्य जगत्सम्मोहनवशीकरणाद्यसम्भवात् तथापि तत्सम्भवोऽस्त्विति यद्युच्येत तर्हि आकाशस्यापि कार्य्यकारणताप्रसक्तिः तस्मात् अनङ्गस्य मोचहानिप्रपञ्चे अनवकाशे प्राप्ते परमेश्वरवराद्रतिदेवीप्रार्थनया तन्मात्रमस्तीति कल्पनीयं तादृशस्य प्रद्युम्नस्य कथं सृष्ट्यादिकर्तृत्वं शक्यं सम्पादयितुं अतः प्रत्यक्षविरुद्धं भवन्मतमप्रमाणमित्युक्ताः क्रौञ्चविदादयः परमगुरुं नत्वा त्यक्तलिङ्गाः शुद्धाद्वैतवृत्त्याश्रिताः पञ्चपूजापराः सत्कर्मशीला बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ मन्मथमतनिबर्हणं नाम

एकविंशं प्रकरणम् ।

# द्वाविंशं प्रकरणम् ।

—::०::—

तस्मादुदङ्मार्गमाश्रित्य मागधपुरं प्राप्य तत्र यक्षालयं नाम प्रसिद्धं देवस्थानमाश्रितः । पक्षकालमाश्रिते सर्वशिष्यजनकृतपूजाचमत्कारधुरीणे जगद्गुरावाचार्य्ये समासीने तत्रस्थब्राह्मणाः कुवेरोपासका नवनिधानरूपस्वर्णगुटिकामालिकापरिशोभितगलाः कुवेरश्रेष्ठपरार्द्धप्रमुखाः स्वामिनं नत्वेदमूचुः स्वामिन् ! मदीयमतमतिविचित्रतरं किल यस्मात् मम स्वामी कुवेरः तस्य नवनिधानेशत्वात् लोके तद्व्यतिरिक्तपूर्णधनाभावात् सर्वमर्थवता जितमिति वचनाच्च कुवेरभक्तानामस्माकं दरिद्रादिदोषाभावात् पूर्णानन्दत्वं सिद्धं तस्य ब्रह्मरूपत्वात् तदेव मोक्षप्राप्तिः कर्म्मसिद्धेरप्यर्थमूलकत्वात् नहि तदतिरेकेणार्थसिद्धिरपि विद्यते अतोऽर्थस्य कर्म्मज्ञानमूलत्वं तदधिपतेः कुवेरस्यैवोपासनकर्म्म मुमुक्षुभिश्च कर्त्तव्यमिति सिद्धम् ।

किञ्च दिक्पालानां मध्ये कुवेरस्य श्रेष्ठत्वं विद्यते यावदभीष्टमर्थं इन्द्रादीनां ब्रह्मविष्णुरुद्रादीनाञ्च स एव ददातीति मर्त्यलोकपाताललोकस्थानामपि स्वदाता स एव तस्य तत्स्वामित्वात् तत्परिचारकसुरसुन्दरीनामक यक्षिण्युपासनेनापि महदैश्वर्य्यस्य सत्त्वात् किं रिक्थोपासनेन शक्यं वक्तुं धर्म्मार्थकाममोक्षरूपपुरुषार्थजनकरिक्थस्वा-

मिनं विना केचिन्मन्दमतयः तदन्यदेवताराधनं कुर्वन्ति तदविवेककारणं पूर्वजन्मसञ्चितप्राप्यसङ्कल्पितव्रतानां हि धनमक्लृप्तव्रतानां कुत इति वचनवलात् कुवेरोपासनं मुक्तिकाङ्क्षिणो भवन्तोऽपि कुर्वन्त्विति प्राप्ते ।

श्रीमदाचार्य्यैरिदमुच्यते भोः कुवेरस्वेशपराङ्मुखाः युष्मन्मतममञ्जसं प्रमाणाभावात् कुवेरस्यार्थस्वामित्वे सिद्धे न हि तेन कस्मैचिदर्थो दत्त निधानागतार्थेन कस्तृप्तो विद्यते लोके दैवात् पूर्णादर्थवतः पुरुषस्यार्थलोपबाहुल्यात् रागाद्यरिषट्कस्य स्थानत्वात् धर्म्मलेशोऽपि नास्त्येव ज्ञानसाध्यस्य मोक्षस्यावकाशः सुतरां नास्त्येवेति सिद्धमेव अतोऽर्थस्यानर्थरूपत्वात् मुमुक्षूणां द्रव्यं परित्याज्यमेव ।

अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः सर्व्वत्रैषा विहिता रीतिः ॥

इत्याचार्य्योक्तेः धर्मोऽपि साध्य इति चेत् भवतु नाम प्राक्कर्म्मवशात् कुवेरनिधानार्थं विना द्रव्यं तदेव विवेकिनां धर्म्मकारणं निधानव्यतिरिक्तद्रव्यस्य भूगर्भनिविष्टत्वात् जनाः खनिसेकतादिरूपेण स्वर्गं बहुधा सम्पादयन्ति तेन केचिज्जीवनं कुर्वन्ति केचिद्भूषणानि धारयन्ति कुवेरद्रव्ये चेन्द्रादयोऽप्युपजीवन्तीति यदुक्तं तदसत् कनकमयमेरुप्रदेशविलसदिन्द्रादयः स्वतन्त्रपुरुषाः सर्वसुखभाजः सर्वेऽप्यत्यैश्वर्य्यसम्पन्ना दीना इव निर्भाग्या इव किं कुवेरं याचन्ते भगवद्ज्ञानवाक्यानां प्रामाण्याभावात् किमुत्तरं वक्तव्यं ब्रह्मविष्णुरुद्राणां द्रव्यदाता कुवेर इत्युक्तं भवत्यशुभार्गैः केन परिहर्त्तव्यः हिरण्यगर्भस्य ब्रह्मणः लक्ष्मीपतेर्नाराय-

तस्य हिरण्यरेतसो रुद्रस्य द्रव्ययाचनां सम्पादितस्य तवापवादोपदेश: किमन्य: कार्य्य: एवं समर्थतरेण भवता कुबेरेण मर्त्य लोकस्थेषु निरर्थापवादपरम्परा सदैव कृता भाति भवतस्तिलकमशकजिह्वायां न किमन्यदुचितं अतोमद्वाक्यात् मूढ़तरा: कुवेरशिष्यै: सह विगतलिङ्गस्त्वमद्वैतविद्यामाश्रित्य स्नानादिनित्यकर्मासक्ता: पञ्चपूजापरायणा: भवत इत्युक्ता: कुवेरादय: त्यक्तनर्वनिधानचिह्ना: परमगुरुपादाम्बुजासक्ता: शुद्धाद्वैतविद्याश्रिता बभूवु: ।

इत्यनन्तानन्दगिरिकृतौ कुवेरमतनिवर्हणं नाम
द्वात्रिंशं प्रकरणम् ।

---

## त्रयस्त्रिंशं प्रकरणम् ।

—:::*:::—

इन्द्रप्रस्थपुरं प्रसिद्धमखिलै: शिष्यै: समेत: पर:
प्राप प्रौढ़महीसुरा: पुरगता: संवीक्ष्य नत्वा गुरम् ।
श्रोतव्यं मतमस्मदीयममलं लोकत्रयाधीश्वरेणेन्द्रेणैव हि निर्मितं फलप्रदन्त्वित्यब्रुवन्नद्भुतम् ॥

पुन: परमगुरुमाचार्य्यस्वामिनं नत्वा ते किलेदमूचु: स्वामिन् ! मदीयमताधिदैवतमिन्द्र: सर्वदेवपरिसेव्यमानचरणाम्बुज: स एव जगदुपादानकारणं किलातस्तदंशा एव ब्रह्मविष्णुशिवा: सदृब्रह्मात्मादिसाधारणशब्दवाच्योऽपि स एवेति प्रतिपादितं नारायणोपनिषदि स ब्रह्मा स शिव: स हरि: सेन्द्र: सोऽक्षर: परम: स्वराडिति कैवल्योपनिषदि

च स एव विष्णुरित्यादि तस्य चतुर्दशलोकेश्वरत्वात्सर्वदा-त्वत्वं निरुक्ते ऋक्संहितायां अभिहितं इन्द्रश्रेष्ठानि द्रविणानि धेहि चित्तं दक्षस्य सुभगत्वमस्मे पोषं रयीणा-मरिष्टं तनूनां स्वात्मानं वाचः सुदिनत्वमह्नामिति इन्द्रो राजा जगतोपदेशे इति च तस्मादिन्द्रस्य सर्वदेवोत्तमत्वं प्राप्तं किञ्च इन्द्रस्य श्रेष्ठत्वद्योतकानि बहूनि सन्ति तथा हि इन्द्रानुजो नारायण एव उपेन्द्रनामावसति कनकाचले स्थानं जरामरणरहितममृतं इष्टार्थदः कामधेनुः कल्पद्रुमः चिन्तामणिरैरावतश्च उच्चैःश्रवःप्रमुखं वाहनं सेवकास्त्रय-स्त्रिंशत्कोटिदेवाः कार्यसहायाः सगणाः चित्रभान्वादि दिक्पालकाः तस्यैव ब्रह्मविष्णुशिवात्मकत्वात् सृष्ट्यादिक-र्तृत्वसिद्धिः। इवर्णेनेमं लोकं द्रावयति स्वशक्तिभिरिति इन्द्रः स एव सर्वात्मा गुणातीतः परात्परतरश्च तद्वशात् अहङ्कारादि तद्द्वारा प्रपञ्चप्रवृत्तिरिति ऊर्ध्वरेतस्कानां यतीनां स एव शिक्षां करोति अधोमुखान् यतीन् सालावृकेभ्यः प्रायच्छदिन्द्र इति अतः सर्वनियन्ता सर्वकारणं सर्वातीतः स एव स्वमायया प्रविष्टः जगत्पालनार्थमिन्द्ररूपेण सर्वे-रुपास्य इव वर्त्तते तस्माच्च श्रेयस्कामिभिः भवद्भिरपि स एव वेदितव्यः धर्मार्थकाममोक्षेच्छूनां तत्पुरुषार्थसिद्धिं स एव करोतीति निरवद्यम्। वयं किल बहुजन्मतपःफलितकायाः जीवन्मुक्ताः किलेन्द्रोऽहमिति तादात्म्योपदेशवशाद्विदितप-रमात्मानो बहुजन्मतपःप्राप्तपरानन्दकरत्वसम्मुक्तिफलाः भद्र-हरिजिष्णुहरिभद्रेन्द्रशचीपतिसरस्वतीपत्याद्यो वयमिति सम्यक् पूर्वपक्षे प्राप्ते।

परमगुरुभिरिदमुच्यते। भो भट्टहरिप्रमुखा भवन्मत-मसमञ्जसम्। कथं प्रमाणाभावात्। इन्द्रशब्दस्य ब्रह्मादि-शब्दान्तःपातित्वेन इन्द्र एव जगदुपादान कारणमिति नारायणीय श्रुत्या प्रदर्शितमिति भवद्भिरुक्तं तदयुक्तम्। सदेव सौम्येदमग्र आसीदित्यादि जगत्कारणवाक्येषु प्रति-पादितं यद्ब्रह्म तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्यादि ब्राह्मणोक्त्या नित्यशुद्धबुद्धमुक्तस्वरूपं सर्वज्ञं सर्व-जगदुपादानकारणमद्वितीयं बोध्यते स ईक्षत लोकान्नु सृजा इत्यादिना जगन्निर्म्माणार्थं स परमात्मा ईक्षत इच्छां कृतवान्। या भगवदिच्छा सैव प्रकृतिः तया किल मह-दादितत्त्वपूर्व्वकं जगत् सृष्टं तत्राहङ्कारतत्त्वे गुणत्रयात्मके ब्रह्मविष्णुरुद्राः सम्प्रसूयन्ते यत इति ते किल जगत्सृष्ट्या-दिकर्त्तारः तत्र सृष्टिकर्त्तुः ब्रह्मणो मुखादिन्द्राग्नी जायेते यदा विराण्मुखा भवन्ति तादृगिन्द्रस्य जगदुपादानका-रणे प्रोच्यमाने तदन्यैर्दिक्पालैः किमकार्य्यं कृतं सर्वप्रदा-तृत्व मिन्द्रस्य वर्त्तत इत्युक्तम्। सर्व्वेषां जन्तूनामपि तत्त-दधिकारयोग्यतादातृत्वमस्त्येव किन्तेन ब्रह्मत्वमस्ति जरा-मरणरहितमृतसेवनमस्ति तेन ब्रह्मत्वमित्युक्तं भवद्-ज्ञानं केन वारयितुं शक्यम्। तथाचेदममृतपानं येषां विद्यते तेषां ब्रह्मत्वप्राप्त्या ब्रह्मानन्त्यप्रसक्तिः एकमेवाद्वितीयं ब्रह्मेत्यादि श्रुतयः व्यर्थाः स्युः किञ्च सहस्रयुगात्मके ब्रह्म-दिने किल इन्द्राश्चतुर्दश। एकस्येन्द्रानुपाततः साधितस्य कालस्य प्रमाणं घटिकादि। २।८।१४।

अतो ब्रह्मदिनचतुर्दशांशानुजीविनः स्वर्गराजस्य एक-

सप्ततिमहायुगाधिपत्यस्य कथं ब्रह्मत्वं वक्तुमुचितम्। स्वमानेन ब्रह्मणः शताब्दायुषि पूर्णे पृथिव्यास्तोये विलयस्तस्याग्नौ वह्नेर्वायौ वायोराकाशे तस्य ब्रह्मणि लयः ब्रह्मणो यथा देवाः इन्द्रादिदिक्पालप्रमुखा उत्पन्नाः, निवृत्तावपि तथैव ब्रह्मणस्तदङ्गं प्रविशन्ति, एवं सर्वलोकदेवलयस्थानं ब्रह्मापि नारायणे विलीनः स्यात्, तस्य रुद्रे, तस्य च महत्तत्त्वे, तस्याऽव्यक्तप्रकृतौ, सा गुणरहितचिदानन्दमये परमात्मनि लीना सन्मात्ररूपेणावतिष्ठते। तदानीं "सदेव सोम्येदमग्र आसीत्" "ब्रह्म वा इदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादि ब्रह्मकारणवाक्यानि प्रवृत्तानि। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व, तद्ब्रह्मेति"। "सत्यं ज्ञानमनन्तं ब्रह्मेति" "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादि श्रुतयः प्रमाणानि। तस्मात् भद्रहरिप्रभृतयो मूढाः यूयं शुद्धाद्वैतविद्याश्रिताः विगतलिङ्गा भवतेति सम्यगुपदिष्टास्ते परमगुरुं नत्वा स्मार्त्तकर्मशीलाः पञ्चपूजापरायणाः शुद्धविद्याश्रिता बभूवुः।

इत्यनन्तानन्दगिरिकृतौ हन्द्रमतनिवर्हणं नाम त्रयस्त्रिंशत् प्रकरणम्॥

# चतुस्त्रिंशत्प्रकरणम् ।

—०:०—

तस्मात् यमप्रस्थपुरं हि प्राप सर्वात्मकः सद्गुणरत्नराशिः ।
शाक्रो यथा सर्वगुणैरुपेतः पुरन्दरः सर्वसुरैरिवासीत् ॥

तत्र किल मासकालमाश्रिते परमगुरौ यमोपासकाः महिषरूपतमसोऽहाङ्कितभुजङ्गयाचिह्नमहिषवेषं धृत्वा नाट्यमाचरन्तः सङ्गायन्तो यमदेवं पुरस्कृताः सम्यगागत्य स्वामिनं नत्वेदमूचुः, स्वामिन् ! अहं किल किङ्करनामा, मच्छिष्याः सन्ति बहुला यमहरकिङ्करतत्त्वदूतादय, सर्वे यमपरायणाः यमस्यैव सर्वहेतुत्वेन सृष्टिस्थित्योरपि स एव कारणमिति कृत्वा तस्यैव सर्वोत्कृष्टत्वं वर्त्तत इति निश्चित्य तदुपासकानामस्माकं मुक्तिरेव भविष्यतीति निर्भीत्या जन्ममरणप्रवाहमुल्लङ्घ्य वर्त्तामः । किञ्च यमप्रतिपादिका वागियम्, यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरं कृत इति । एतदर्थं एवमुन्नेयः, सोमं यागद्रव्यं यमाय सुनुत बह हविश्च यमाय जुहुत कस्मादित्युक्तेः, यज्ञः श्रौतः स्मार्त्तो वा यमं गच्छति, हशब्दो निश्चयार्थः, अरमलमग्निरेव हुतः यमो नेति शेषः । एवं यज्ञभुजो यज्ञरूपस्य यमस्य सृष्ट्यादिकारणस्य परब्रह्मत्वे सिद्धे तन्मूर्त्तिर्द्विधा भवति शुक्लकृष्णभेदात्, या शुक्ला सा परब्रह्मरूपा, यच्छुक्लं "तद्ब्रह्मेति" श्रुतेः । तस्मान्निर्गुणाद्यमादाविर्भूतमहत्तत्त्वादिद्वारा कृ-

द्राख्यो यमावतारः, तस्माज्जातः कृष्णवर्णो यमः सर्वव्यापकः विष्णुसंज्ञः, तन्नाभिकमले जातो रक्ताधिकत्वाद्रक्तवर्णाख्यो ब्रह्माख्यो यमः, तद्द्वारा किलाष्टदिगीशाः सूर्यादिग्रहाः सर्वचराचरात्मकं जगदिति कृत्वा स्वयं पुण्यपापकर्मोपाधिद्वारा सर्वप्राणिशिक्षां कुर्वन् दक्षिणदिग्भागेश्वरदण्डपाणिर्महिषवाहनारूढो यमदेवो वर्त्तते वेशधारीव। निजसत्यज्ञानानन्तलक्षणं विहाय किञ्चिज्ज्ञ इव इन्द्रादीनां स्वांशानां मध्ये स्वयमपि किञ्चिदिव लक्ष्यते, भस्मान्तर्गताङ्गार इव, पवनान्तर्गताग्निरिव समुद्रान्तर्गतवाड़व इव, मेघान्तर्गतजलमिव, जड़ान्तर्गतात्मेव, घटान्तर्गतदीप इव, सरोऽन्तर्गतपद्ममिव भाति। तस्मात् जगत्कारणवाक्याभिप्रायरूपं शुद्धबुद्धमुक्तस्वरूपं ब्रह्म यमस्तस्यांशः सगुणः, शुद्धयमोपासनायाः कर्त्तुमशक्यत्वात्। सगुणनीलवर्णयमोपासनमस्माभिः क्रियते तेन मूलाज्ञाननिवृत्तौ यम एव सर्वमिति बोधोत्पत्त्यनन्तरं शुद्धयमप्राप्तिरेव मोक्ष इति च। तस्मात् यूयं मोक्षकाङ्क्षिणः किल तस्मात् यमोपासनं कुरुध्वं तत्कटाक्षलेशेनैव मुक्तिर्वो भविष्यतीति प्राप्ते परमगुरुरेवं पठति, भोः किङ्करादयः शृणुध्वं यूयं, भवन्मतमनर्हं, कथं, श्रुत्यादिसर्ववाक्प्रपञ्चविरुद्धत्वात् तावद्वेदविरोध एव भवति। पुरा नचिकेताः किल पितृशापात् यमपुरं प्राप्तः, तद्द्वारे त्रिरात्रमनशनहस्थेव उवास, तं सूर्य्यवर्च्चसं नचिकेतसमतिथिं दृष्ट्वा वेपमानशरीरो यम इदमुवाच, "तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्! अतिथिर्मे नमस्यः। नमस्तेऽस्तु ब्रह्मन्! स्वस्ति मेऽस्तु तस्मात्

प्रति चौम् वरान् वृणीष्वेति ।" एवं नमःपुरःसरं यमेना-द्दरेणोक्तः नचिकेताः किल वचनमुवाच । "शान्तसङ्कल्पः सुमना यथा स्यात् वीतमन्युर्गौतमो माऽभिमृत्यो त्वत्प्रसृष्टं माऽभिवदेत् प्रतीतः एतत् त्रयाणां प्रथमं वरं वृणे"इति नचिकेतसोक्तो मृत्युःपुनराह, "यथा पुरस्तात् भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः, सुखं रात्रीः शयीता वीतमन्युः त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तं, स्वर्गे लोके न भयं किञ्च नास्ति न तत्र त्वं न जरया बिभेति, उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोक इति" पितृसौमनस्यकाङ्क्षिणो नचिकेतसः तत्पितुश्च जरादिदोषविहीनं स्वर्गलोकप्राप्तिरूपं फलं शान्तसङ्कल्पविग्रहादिफलञ्च सम्यक्प्रदं मृत्युं नचिकेताः पुनराह द्वितीयं वरम्, "स त्वमग्निं स्वर्गमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यं,स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेणेति" नचिकेतसा पृष्टेन यमेन प्रोक्तो द्वितीयवरस्त्वेताग्निरूपः, "त्रिनाचिकेतः त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू ब्रह्मयज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेतीति"। एवमुक्तो नचिकेताः तृतीयवरप्रार्थनामकरोत्, येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके, एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति पृष्टः यमस्तद्वरस्य रहस्यतत्त्वगोचरत्वात् बहुधा द्रव्यवाहनमतिचिरायुः पुत्रसुखं फलं दास्यामि तृतीयवरार्थमिति बहुधा लोभयित्वा पश्चान्निराशालोभनीयं नचिकेतसं दृष्ट्वा प्रणम्य इदमाह "सर्वे वेदा यत्पदमामनन्तीति, तपांसि सर्वाणि

च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रब्रवीम्योमित्येतदिति ।

अशरीरं शरीरेषु अनवस्थितमीश्वरम् ।

महान्तं विभुमात्मानं मत्वा धीरो न शोचतीति" च ॥

"यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनं मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति"। जाग्रदाद्यवस्थासाक्षी स्वयमशरीरः शुक्लयमस्तेजोमयस्तुरीयः परमात्मा मूर्ध्नि पूर्णमण्डलाकारेण विराजमानः सर्वातीतः सर्वकारणं परं ब्रह्मास्ति तस्य गुणातीतत्वेन सर्वोत्कृष्टत्वेन च तदुपासनमत्यन्तगहनमपि तदधःप्रदेशवर्त्तमानपरमाङ्गुष्ठमात्रपुरुषे यो मनोलयं करोति स मुक्त इति। किञ्च सर्वसंहारकर्त्तृत्वं तस्य प्रतिपादयति ब्रह्मक्षत्राद्युपलक्षितं जगन्मृत्युरूपसेचनमिति च सम्यगुपदिष्टो नचिकेताः कृतार्थो भूत्वा पितरं प्राप यमस्यैव परब्रह्मत्वे प्रोच्यमाने स्ववाक्येऽप्रामाण्यप्रसक्तिः यस्यात्मनो जगदन्नं मृत्युरुपसेचनमिति तस्यैव स्वोपसेचनत्वविरोधात्। अतो यमान्यद् ब्रह्म सर्वकारणं परिकल्पनीयम्। यमादीनां किञ्चिज्ज्ञत्वेन यमाद्युपास्यं ब्रह्म सगुणं सर्वकारणञ्च निर्गुणं परं ब्रह्म सदेव सौम्येदमग्र आसीदित्यादिकारणवाक्यप्रतिपादितम्। सगुणं सृष्ट्यादिकारणं ब्रह्मविष्णुशिवात्मकम्, अतो लयमूर्त्तेः शिवस्य महदुदरं प्रलये चतुर्मुखादयो देवा इन्द्रादिदिक्पतयः सूर्यादिग्रहाः पृथिव्यादिभूतानि चराचरं सर्वमपि जगत् प्रविशन्ति तदानीं किल सर्वजगद्रूपान्नभक्षणकाले उपसेचनं नाम उपदेशो यमो भविष्यति तत्तादृग्यमस्य

लिङ्गादिधारणेन मुक्तिरिति अनृतमुक्तं भवता यमादिगुणा किङ्करेण। पुराणेष्वपि मार्कण्डेयादिषु यमार्दितेषु मधु-सूदनो भक्तवत्सलो महादेवः स्वतन्त्रो यमं निष्पीड्य भक्त-पालनमकरोदिति महापातकिनः सुन्दरनाम्नो ब्राह्मणस्य यमदूतैराकृष्यमाणे जीवे धनलोभात् कृतैकशिवरात्रिजाग-रणफलतुष्टमहादेवदूतैः सर्वोत्कृष्टबलवद्भिस्ताड़िता यमदूताः सुन्दरं परित्यज्यापलायन्त। शिवदूतैर्नीतः सुन्दरः शिव-भक्ताग्रगण्य इव कैलासे वर्त्तमानः इति च पुराणेषु वर्त्तते। अजामिलो ब्राह्मणकर्म्म परित्यज्य चण्डालीसंसर्गतः पुत्रान् पञ्च लब्ध्वा कनिष्ठनारायणाख्यपुत्रनामोच्चारणात् त्यक्त-कलेवरस्य ब्राह्मणस्य सूक्ष्मशरीरे यमदूतैर्नीयमाने बलाढ्या विष्णुदूताः समागत्य अजामिलं स्वर्लोकं प्रापयन्ति स्म, दुर्बलिनस्तु यमदूतास्तैर्भग्नकलेवरा रुदन्तः सन्तो यमलोकं गताः इति वर्त्तते। तस्मात् यूयं किङ्करादयस्त्यक्तलिङ्गाः शुद्धाद्वैतविद्यामाश्रित्य स्नानसन्ध्यावन्दनस्वाध्यायपितृतर्पण-वैश्वदेवातिथिपूजादिकं कर्म्म समाचरथ। एवं निष्पा-पात्मानः सद्गुरूपदेशात् ब्रह्मस्वरूपं ज्ञात्वा मुक्ता भवथ इत्युक्ताः किङ्करादयः परमगुरुं नत्वा शुद्धाद्वैतत्त्वाश्रिताः सच्छिष्या बभूवुः॥

इत्यानन्दगिरिकृतौ यममतनिवर्हणं नाम चतु-स्त्रिंशत् प्रकरणम्।

---

# पञ्चविंशत् प्रकरणम् ।

—※—

तस्मात् प्राप प्रयागाख्यं स्थलं पुण्यविवर्द्धनम् ।
गङ्गाया यमुनायाश्च सरस्वत्याश्च सङ्गमम् ॥

तत्र परमगुरौ समास्थिते वरुणोपासकाः पाशचिह्नाः वायूपासका ध्वजाचिह्नाः भूमिदेवोपासकाः पूर्णाङ्कास्तीर्थोपासका विन्दुचिह्नाश्च समागताः। समागत्य तीर्थपति-प्राणनाथानन्तजीवनदाख्याः स्वशिष्यैः सहेदमूचुः, स्वामिन् आचार्य्य ! मदीयमतमतिविचित्रमत्यन्तपुण्यदं शृणु। अहं किल तीर्थपतिः, मदीशो वरुणः सर्वदेववन्दितचरणारविन्दः सर्वेषां जीवन इति च सर्वोत्कृष्टः स एवोपासनीय इति। ततः प्राणनाथः स्वामिनं नत्वेदमाह, स्वामिन्! मम्मतेशो वायुः किल सर्वदेहप्राणरूपः स एक एव लोकैरुपासनीयः। "ये प्राणं ब्रह्मोपासते" "प्राणो हि भूतानामायुरिति" श्रुतेः। अतः प्राणोपासकानामस्माकं तदङ्गपरिशुद्धगात्राणां न विचारः कर्त्तव्यः किल इहामुत्र च। ततः परमगुरुमनन्तो नत्वेदमुवाच, स्वामिन्! मदीयमतमुत्तमम्, भूमिः किल सर्वकारणम्। "स्योनापृथिवी भवानृक्षरा निवेशनीया स्वा नः शर्म्म सप्रथा" इति श्रुतेः भूमे सर्वोत्कृष्टत्वात् सर्वदेवमयत्वाच्च तदुपासकानामस्माकमिहामुत्रापि न विचार इति। ततः स्वामिनं जीवनदो नत्वेदमुवाच, स्वामिन्नस्मन्मतमति विचित्रतरम्। तीर्थस्य

ब्रह्मरूपत्वात् तदुपासनमेव सर्वैर्मुमुक्षुभिः कर्त्तव्यम्, तद्व्यतिरिक्तापरमाभावात् त्रिवेणीतीर्थविन्दुसेवनमात्रेण ब्रह्महत्यादिदोषशान्ति र्भवति । दर्शनमात्रेणैवेति केचिद्वदन्ति, "अम्ब त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं फलमिति" नारदोक्तेः । किञ्च उदकस्यैव सर्वात्मकत्वं श्रुत्या दर्शितम्, "आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणोऽर्णवः । आपः पशवः आपोऽन्नमयोऽमृतमयः सम्राडापो विराडापः । स्वराडापो वा छन्दांस्यापोज्योतींष्यापोयजूंष्यापः" इत्यादितः सर्वमयत्वे तीर्थस्य ब्रह्मत्वं सिद्धम् । तदुपासकानामस्माकमिहामुत्र न विचारः कर्त्तव्य इति । तस्माद्भवन्तोऽपि मोक्षकाङ्क्षिणः सर्वदा तीर्थोपासनं कुरुध्वमिति प्राप्ते परमगुरुभिरेवमुच्यते, भोस्तीर्थपतिप्राणनाथानन्तजीवनदाख्याः शृणुध्वं, युष्मन्मतानि अप्रमाणानि, जगत्कारणवाक्यविरुद्धत्वात् । प्रथमं वरुणोपासनमनुचितम्, तस्य जगत्कारणत्वाभावात् । तथा वायोरपि परमत्वाभावः, चरपञ्चभूतान्तःपातित्वात् । भूमेरपि तद्वज्जन्यदर्शनात् यज्जन्यं तदनित्यमिति मानम् । "आत्मन आकाशः सम्भूतः, आकाशाद्वायुर्वायोरग्निः, अग्नेरापः, अद्भ्यः पृथ्वी" इति श्रुतेः तीर्थस्यानित्यता; किन्तु भूतानां मध्ये तीर्थस्योत्तमत्वं वर्णयति, "आपो वा इदं सर्वमिति" । चरज्ञानेनाचरपरब्रह्मप्राप्त्यभावाद् युष्माकं कथं मुक्तिरस्ति । तदभावाज्ज्ञानस्यापि फलाभावो वक्तव्यः, उपास्यानामनित्यत्वात् । तस्मान्मोहबुद्धिं परित्यज्य शुद्धाद्वैतविद्यानिरता भवथ । विश्वतैजसप्राज्ञातीतपरमाक्षुण्णमात्रब्रह्मद्वारा

मनोलयानन्तरं पूर्णमखण्डलाकारं शुद्धं ब्रह्म प्राप्य मुक्ता भवथ इत्याज्ञप्ताः परित्यक्तलिङ्गाः शुद्धाद्वैतविद्याश्रिताः शिष्या बभूवुः।

इत्यानन्दगिरिकृतौ वरुणवायुभूम्युदकसेवकमतनिवर्हणं नाम पञ्चविंशत् प्रकरणम्॥

---

## षट्त्रिंशत्प्रकरणम्।

—:::*:::—

एवं निराकृतेषु पुनरन्यः शून्यवादी प्रत्यवतिष्ठते। स किल स्वामिनं प्रणम्येदमुवाच, मम मतं सुखदं, तथाहि मया मार्गे किञ्चिद् दृष्टं तत्सावधानेन शृणु।

मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः।
एष वन्ध्यासुतोयाति शशशृङ्गधनुर्द्धरः॥
तं दृष्ट्वा देवभावेन प्रणम्य शिरसा भृशम्।
आगतोऽस्मि यतिश्रेष्ठ! तवान्तिकमहं द्रुतम्॥

इति श्रुत्वा भो विचित्रतर! त्वन्नाम किम् इत्याचार्य्यैरुक्तः स तु पुनरुवाच, स्वामिन्! अहं निरालम्बनामा, मत्पिता कल्पितरूपनामा, मन्माता निर्भरिता, इति निशम्य परमगुरुरिदमाह, भो निरालम्ब! भवन्मतमसमञ्जसम्। कथम्। तस्य शून्यत्वात्, शून्यस्यैव परब्रह्मत्वमिति यदुच्यते तदयुक्तम् "तमेव भान्तमनुभाति सर्वमिति" श्रुतेः। सूर्य्यकोटितेजोरूपस्य ब्रह्मणः शून्यत्वं वक्तुमनुचितं, तदधिकतत्समतत्स्वरूपाभावादेकमेवाद्वितीयं ब्रह्म सर्वैरुपासनीयमिति सिद्धान्तः। तस्मान्मूढ़बुद्धिं परित्यज्य

शून्यमतं त्यक्त्वा शुद्धाद्वैतविद्याश्रितो भव इति नियमितो निरालम्बः पुनराह स्वामिन्! आकाशस्य ब्रह्मत्वं युक्तं किल। कथं। व्यापकत्वादेरमूलकत्वाच्च। तथाहि। "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमाकाशं प्रत्यस्तं यन्तीति"। किञ्च वेदान्ते "ॐ आकाशस्तल्लिङ्गात्" इत्यधिकरणे आकाशस्य ब्रह्मत्वप्राप्तिर्निर्द्धारिता। अतः श्रुतितात्पर्य्यात् ज्यायस्त्वपरायणत्वे निर्द्धारिते। आकाशं प्रत्यस्तं यन्ति" इत्यादिना लयस्थानञ्चाकाश एवेति कृत्वा सृष्ट्यादिकारणमाकाश एव ब्रह्मेति प्राप्तेः। पुनराचार्य्यैरिदमुच्यते, किं निरालम्ब! मूढ़तम! ब्रवीषि, कथमाकाशस्य ब्रह्मत्वमुचितं वक्तुम्। आकाशलवसलिलांशाभ्यां जातस्य शब्दस्याकाशगुणत्वात्, सगुणस्याकाशस्य कथं ब्रह्मत्वप्राप्तिः। भूतरूपस्याऽस्याकाशाद्वायुरित्यादिश्रुतिसिद्धत्वात् कार्य्यभूतोत्पत्तिलयस्थानमाकाशः किल तस्यापि ब्रह्मजन्यत्वं वर्त्तत एव। किन्तु आकाशशब्दः साधारणो ब्रह्माकाशयोर्वर्त्तते। "यदेष आकाश आनन्दो न स्यात्"। आकाशोऽपि नामरूपयोर्निर्वाहिता ते यदन्तरा तद्ब्रह्मेति ज्यायस्त्वपरायणत्वादिगुणा अपि भवन्त्येव निर्निमित्ते नभस्यवस्थिताः। तथाहि। "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति श्रुतिः। "विज्ञानमानन्दं ब्रह्म रातेर्धातुः परायणमिति"। अपि च अन्तर्वर्त्त्वदोषेण कालावत्यस्य पक्षं नुदित्वा अनन्तरं किञ्चिद्वक्तुकामेन शैवलिना आकाशः परिगृहीतः, तदाकाशमुद्गीथे सम्पाद्योपसंहरति, "एष को वरीयानु-

द्गीथः स एषोऽनन्त इति ऋचः। अक्षरे परमे व्योमन् सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इत्यादि श्रुतिभ्य आकाशशब्दस्य ब्रह्मपरत्वे निर्द्धारिते शून्यवादिनिरालम्बनामा परमगुरुं नत्वेदमाह, स्वामिन्! भवत्पाददर्शनेन कृतार्थोऽहं पुनर्ब्रह्म बोद्धुमिच्छामि, तदुपदेशं कुरु इति अत्यन्तं निरालम्बमिदमाह गुरुः, "ॐ आकाशस्तल्लिङ्गात्" इत्यधिकरणसूत्रवाक्याभ्यां ब्रह्मैवाकाश इति सम्यग्हृदयकमलाग्रनिष्ठसूक्ष्मविवराकाशोदहराख्यो ब्रह्म, तदुपास्य त्वं कृतार्थो भवेत्युक्तः शुद्धाद्वैतविद्याश्रितः शिष्योऽभवत्॥

इत्यानन्दगिरिकृतौ शून्यमतनिवर्हणं नाम
षट्त्रिंशत् प्रकरणम्।

---

## सप्तत्रिंशत्प्रकरणम्।

—::०::—

एवं परिहृते शून्यमते पुनरन्यो बालचन्द्राङ्कविराजमानभुजद्वयः आदिवराहोपासकः स्वामिनं नत्वेदमुवाच। भो यतिश्रेष्ठ! कल्पान्ते किल एकीकृतसकलवार्धिजलनिमग्नभूम्युद्धरणहेतुभूतस्यादिवराहस्य मतं मदीयं विद्धि, भगवतो दंष्ट्रादण्डाग्रे सप्तसमुद्रकुलाचलादियुता क्षितिः कमलमात्रं तिष्ठति, तस्मात् सकलजगत्कारणं सगुणनिर्गुणं ब्रह्म सर्वैर्मुमुक्षुभिः स एक एव परायणं, अतो भवन्तोऽपि मोक्षकाङ्क्षिणो दंष्ट्राङ्कयुतभुजाः वराहोपासकाः

भवद्भिरिति शास्त्रे पठन्त्याचार्य्याः, भो वराहोपासक! भवन्मतमनर्हम्, कुतः वेदविरोधात्, तत्कथं ब्राह्मणेन तपः कर्त्तव्यमित्येव ब्राह्मणलक्षणं शास्त्रे प्रतिपादितम्। "तपो ब्रह्म तपः शौचं तपः सत्यं तपो व्रतं तपः शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तपो भूर्भुवर्ब्रह्ममात्रं स्यादेतत्तपः" इति तप एव ब्रह्म, तृप्तेर्द्दीप्तोरर्थभूतं कृत्स्नं वस्त्वभिधीयते सत् समाधिकवस्त्वभावात्। ब्राह्मणस्तावन्नभिन्नवस्तुमात्रमस्ति तेन न ब्रह्माभिन्नो जीव इति। अतो जगदुपादानकारणस्यास्य सृष्टिस्थितिलयाद्या बहवो जातास्तैश्चिह्नैरङ्कनीयमिति यदि प्रामाण्यं तर्हि मत्स्यकूर्मादिचिह्नैः शिरःप्रभृतिगात्रेषु यथाशक्यमङ्कनीयम्। ब्राह्मणव्यतिरिक्तस्यैवाङ्कनप्रयोजनं न तु ब्राह्मणानाम्। ब्राह्मणं कर्म्म कुर्व्विति तत् प्रयासस्यान्यथासिद्धत्वात्। विप्रोचितं कर्म्म परित्यज्यादिवराहोपासनं कर्त्तव्यमिति को वाऽशनिपातस्तवागतः। "उदिते सूर्य्ये प्रातर्जुहोतीति" श्रुतिः क्व गता। ब्राह्मण्याचारं परित्यज्य शूद्राचारपरिग्रहणं कथं भवता कृतम्। "अहरहः सन्ध्यामुपासीत" इत्यादि विप्रकर्त्तव्यविधिवचनानि तव शिक्षां किं न कुर्व्वन्ति। सगुणब्रह्मोपासना कर्त्तव्येति चेत् तथापि "ब्रह्मविष्णुरुद्राः सम्प्रसूयन्त" इति प्रमाणम्। तेषामेकतमेनोपासनेन भवितव्यम्, किमर्थं तदपि नाङ्गीकृतभवता। वराहदंष्ट्रादण्डचिह्नं धृतं किमर्थं भवताऽहितम्। अतः सदाचारं परित्यज्य दंष्ट्रादण्डाङ्कविराजमानभुजः पशुमार्गेण वर्त्तय, ज्ञानं विना मोक्षाभावः, दण्डाऽस्तावत्त्वम् कर्म्मोत्कृष्ट वर्त्तसे

कर्म्मातिक्रमी दण्ड्य इति मन्वादिकृतधर्म्मशास्त्रेषु प्रमाण-दर्शनात्। तस्मात् स्वयं मूढ़बुद्धिं परित्यज्य विगतलिङ्गः स्वकुलोचितसत्कर्म्म कुर्वन् वर्त्तस्व, शुद्धाद्वैतविद्योपदेशं गुरुमुखात् प्राप्य मुक्तो भवसीति सम्यगुपदिष्टो वराहः परमगुरुं नत्वा तन्मुखारविन्दात् पारमार्थिकं ज्ञानं लब्ध्वा लक्ष्मणाख्यः शिष्यतरोऽभवत्॥

इत्यानन्दगिरिकृतौ वराहमतनिबर्हणं नाम सप्तविंशत् प्रकरणम्॥

—०—

## अष्टविंशत् प्रकरणम्।

एवमेतन्मते परिहृते पुनरन्यश्चतुर्दशलोकोपासकः काम-कर्म्मनामा समागत्य यतीशं नत्वेदमाह, स्वामिन्! लोकसङ्घ एवेश्वर इति ज्ञात्वा लोकानामुपासकोऽहम्, लोकानुग्रहादेव सर्वलोकप्राप्तिफलं सम्यगस्ति, तस्मात् इहामुत्रापि न विचारः कर्त्तव्य इति, भवन्तोऽपि मुक्ति-काङ्क्षिणः सत्यलोकवासेच्छातः प्रतिदिनं लोकोपासनं कुरुध्वम्। प्रसन्ने लोकसङ्घे सत्यलोकावाप्तिरिति सर्वो-न्नतफलं प्राप्स्यथ इति प्राप्ते भगवद्भिराचार्य्यैरिदमुच्यते, भोः कामकर्म्मन्! मूढ़तम! नास्ति किन्तव विवेकलेशोऽपि। लोकोपासनेन फलमस्तीति भवतोक्तम्, तेषां भौतिक-त्वादनित्यत्वाच्च तदुपासनमनृततरम्, जड़स्य फलार्पण-सामर्थ्याभावात्, उपासनं कर्त्तव्यं यदि सगुणब्रह्मण

एव तस्यापि फलमस्त्येवेति सम्यगुपदिष्टः कामकर्म्मनामा परमगुरुं नत्वा तदुपदेशबलात् अद्वैतवृत्त्याश्रितोऽभवत् ॥

इत्यानन्दगिरिकृतौ लोकमतनिवर्हणं नाम अष्टत्रिंशत् प्रकरणम् ॥

---

## एकोनचत्वारिंशत् प्रकरणम् ।

एवमेतन्मते परिहृते पुनरन्ये गुणोपासकाः प्रत्यवतिष्ठन्ते, ते किल स्वामिनमिदमाहुः, स्वामिन् ! गुणाः किल लोककर्त्तारः ब्रह्मादिदेवकारणं किल, अतो वयं गुणोपासनामात्रेण कृतार्थाः । सर्वस्यापि प्रपञ्चस्य गुणमयत्वात् सर्वलोकपूज्यत्वं गुणोपासकानामस्माकमस्ति । तस्माद्भवन्तोऽपि गुणोपासनं कुर्वन्तो मुक्ता भविष्यन्तीति प्राप्ते दुष्टमतशिक्षार्थे आचार्य्यैरिदमुच्यते, किमुक्तं भवद्भिर्मूढतमैर्गुणोपासनं कर्त्तव्यमिति, तदनुपपन्नम्, तेषां जन्यत्वात् अशाश्वतगुणोपासनेन किं शाश्वतफलरूपो मोक्षोऽस्ति । तस्मान्मूढबुद्धिं परित्यज्य शुद्धाद्वैतविद्यामाश्रित्य सत्यास्यशिलाविगतशेषभाषा भवथ इति प्रोक्तास्ते कृतविलासाः यतिशिष्या बभूवुः ।

इत्यानन्दगिरिकृतौ गुणमतनिवर्हणं नामैकोनचत्वारिंशत् प्रकरणम् ॥

---

